# ॥ पञ्चरात्रान्तर्गतविश्वामित्रसंहितायाः
# नवीनसंस्करणं तुलनात्मकमीक्षणं च ॥

UNDEMANE SHANKARABHATTA



KENDRIYA SANSKRIT VIDYAPEETHA
TIRUPATHI
1970

# ॥ पञ्चरात्रान्तर्गतविश्वामित्रसंहितायाः नवीनसंस्करणं तुलनात्मकसमीक्षणं च ॥

×

वाराणसेयसंस्कृतविश्वविद्यालयस्य आगमविभागे
"विद्यावारिधि" (पी. एच्. डी.)–उपाध्यर्थं
समर्पितः शोधप्रबन्धः ।

×

लेखकः
उण्डेमने शङ्करभट्टः,
साहित्यशिरोमणिः,
संशोधनसहायकः,
केन्द्रीयसंस्कृतविद्यापीठम् ।

×

[डॉ. मल्लादि द. बालसुब्रह्मण्यम्, एम्. ए., पी. एच्. डी.,
प्रपाठकः, केन्द्रीयसंस्कृतविद्यापीठम्
-इत्येतेषां मार्गदर्शनानुरोधेन लिखितोऽयं शोधप्रबन्धः ।]

×



केन्द्रीयसंस्कृतविद्यापीठम्
तिरुपति
१९७०

॥ पञ्चरात्रान्तर्गतविश्वामित्रसंहितायाः नवीनसंस्करणं तुलनात्मकसमीक्षणं च ॥

A THESIS SUBMITTED TO

# VĀRĀṆASEYA SAṀSKṚTA VIŚVAVIDYĀLAYA

IN THE ĀGAMA FACULTY

FOR THE DEGREE OF

VIDYĀ VĀRIDHI [DOCTOR OF PHILOSOPHY]



BY

UNDEMANE SHANKARABHATTA

Sāhitya Śiromaṇi,

Research Assistant,

Kendriya Sanskrit Vidyapeetha.

[PREPARED UNDER THE GUIDANCE OF

DR. M. D. BĀLASUBRAHMAṆYAM, M.A., Ph.D.,

READER,

KENDRIYA SANSKRIT VIDYAPEETHA]

KENDRIYA SANSKRIT VIDYAPEETHA

TIRUPATI

1970

## विषयानुक्रमणिका

ण

श्रीमद्भिः मेलकोटे यतिराजसम्पत्कुमाररामानुजमुनिभिः पाद्मसंहिता श्रीप्रश्नसंहिता

चेति संहिताद्वयं क्रमेण क्रि. प. १९२७ [Vol.I ] १९३०[Vol.II], १९०४

वर्षेषु ;

श्रीमता डॉ॰ गणपतिशास्त्रिमहोदयेन विष्णुसंहिता क्रि. प. १९२५ वर्षे ;

श्रीमता पोविवेटि श्रीरामानुजाचार्यमहोदयेन कपिञ्जलसंहिता, पुरुषोत्तमसंहिता,

परमपुरुषसंहिता चेति संहितात्रयं यथाक्रमं क्रि. प. १९२१, १९२३, १९२८,

वर्षेषु ;

श्रीमता पम्मार् कृष्णमाचार्यमहोदयेन ब्राह्मसंहिता क्रि. प. १९३२ वर्षे ;

श्रीमता लक्ष्मीपुरं श्रीनिवासाचार्यमहोदयेन शेषसंहिता[1] क्रि. प. १९३४ वर्षे ;

श्रीमता डा. एस्. कृष्णस्वामि अय्यङ्गार् महोदयेन परमसंहिता क्रि. प. १९४०

वर्षे;

पञ्चरात्रम्

श्रीमता भुवनमोहनसांख्यतीर्थमहोदयेन [illegible]संहिता [आदिकाण्डः ] क्रि.प.

१९५२ , १९५६ वर्षयोः ;

श्रीमता गोविन्दाचार्यमहोदयेन पारमेश्वरसंहिता क्रि. प. १९५३ वर्षे .

---

१ संहितेयं पाञ्चरात्रसंहितासु तन्त्रानुक्रमणे न परिगण्यते ।

श्रीमता डाक्टर श्रीनिवासशास्त्रीमहोदयेन अनिरुद्धसंहिता ख्रि. प. १९५६ वर्षे;

श्रीमता श्री. कृष्णमाचार्यमहोदयेन लक्ष्मीतन्त्रं ख्रि. प. १९५९ वर्षे;

श्रीमता श्री. रामानुजज्योतिषिमहोदयेन पाद्मसंहिता [Vol. II] ख्रि. प. १९८२ वर्षे;

श्रीमत्या सीतापद्मनाभन् -महोदयया श्रीप्रश्नसंहिता ख्रि. प. १९६९ वर्षे -

इत्थं विंशतिः संहिताः संपाद्य मुद्रापिताः । एतासाम् अहिर्बुध्न्यसंहिता, जयाख्यसंहिता, पाद्मसंहिता, लक्ष्मीतन्त्रम्, श्रीप्रश्नसंहिता [श्रीमत्या सीतापद्मनाभन् महोदयया संपादिता] चेति पंचैव संहिताः संशोधनपद्धत्यनुरोधेन संशोध्य मुद्रापिताः ।

एतदतिरिक्ततया पंचरात्रे हरिभक्तैर्भारतीयैः पाश्चात्यैश्च शोधनं कृतमुपलभ्यते । तथा हि -

श्रीमता आर्. जी. भण्डारकरमहोदयेन भारते दृश्यमानान् वैष्णवादिसंप्रदायानधिकृत्य लिखिते Vaisnavism, Śaivism and Minor Religious Systems[३] संज्ञके ग्रन्थे सात्वत-भागवत-पंचरात्रसंप्रदायानधिकृत्य व्यापका विचाराः प्रस्तुताः सोपपत्तिकम् ।

श्रीमता डा. एस्. के. आयंगार् महोदयेन सात्वतसंप्रदायमधिकृत्य लिखिते 'Sāttvatas'[४] संज्ञके लेखे पंचरात्रसंप्रदायस्य प्राचीनता संप्रदर्शिता ।

३. See pp. 3, 4-13, 38-41  ४. cited by B. Bhattacharya, Introduction p.15 to जयाख्यसंहिता

श्रीमता एम्.डी. रामानुजाचार्यमहोदयेन अहिर्बुध्न्यसंहिताप्रस्तावनायां पंचरात्रस्य प्राचीनतां वेदमूलकतां भगवत्कर्तृकतां चाधिकृत्य प्रस्तुतम् ।

श्रीमद्भ्यां वी. भट्टाचार्य तथा ए. कृष्णमाचार्यमहोदयाभ्यां जयाख्यसंहिताप्रस्तावनायां पंचरात्रसंप्रदायस्य प्राचीनतां, पंचरात्रे जयाख्यसंहितायाः स्थानं, जयाख्यसंहितायाः कालं चाधिकृत्य विवेचितम् ।

श्रीमद्भ्यां डा. एस्. कृष्णस्वामि अय्यंगार् वेङ्कट राजगोपालाचार्याभ्यां परमसंहिताप्रस्तावनायां पंचरात्रसंप्रदायस्य प्राचीनतां, अन्येभ्यः पंचरात्रसंहिताभ्यः परमसंहितायाः वैशिष्ट्यं चाधिकृत्य विवेचनं कृतम् ।

श्रीमता वी. कृष्णमाचार्यमहोदयेन लक्ष्मीतन्त्रप्रस्तावनायां आगमभेदान्, आगमानां प्रामाण्यम्, पंचरात्रपरिचयं, पंचरात्रसंहितापरिगणनम्, लक्ष्मीतन्त्रे प्रतिपाद्यमानानां मुख्यानां पंचरात्रसिद्धान्तानां सूक्ष्मपरिचयं चाधिकृत्य प्रस्तुतम् ।

श्रीमता डा. वी. राघवन् महोदयेन "The Name Pāñcarātra with an analyisis of the Sanatkumāra Saṁhitā in manuscript" इत्यस्मिन् शोधलेखे पंचरात्रशब्दार्थविवेचनपूर्वकं हस्तलिखितायाः सनत्कुमारसंहितायाः पंचरात्रस्य प्रतिपाद्यस्य च परिचय उपस्थापितः ।

श्रीमता डा. एस्. आर्. भट्टमहोदयेन The Philosophy in Pāñcharātra इत्यस्मिन् पुस्तके पंचरात्रशास्त्रपरिचयपूर्वकं पंचरात्रे दार्शनिकसिद्धान्ता-

संहिता पौष्कर्युत्प्रतिमार्थं, <u>बृहद्ब्रह्मसंहिता</u>प्रतिमार्थं चाधिकृत्य सोपपत्तिकं विवेचितम् । पुस्तकमेतदर्वाचीनानां पंचरात्रसंशोधकानां मार्गदर्शकमिव वर्तते । श्रेडर महोदयवाक्यानि नोद्धृतानि स्युः। एतदोऽपि अर्वाचीनः पंचरात्रसंशोधक उत्साहेन येन वा श्रेडरमहोदयोऽयं पंचरात्र-संशोधकानां मार्गदर्शी संजातो । एतदीयसंशोधनशैलीमनुसृत्यैव पंचरात्रे संशोधने यत्न आधीयते इत्युक्ते नात्युक्तिः स्यात् ।

श्रीमता Hermann JACOBI महोदयेन पंचरात्रे प्रयुज्यमानं वासुदेवमधिकृत्य स्वीये "Incarnation [Indian]"[५] इत्यस्मिन् लेखे विदुषा पंचरात्रसंप्रदायस्य -सात्वत- सम्प्रदायत्वेनोपदिष्टस्य -निर्देशः कृतः ।

श्रीमता H. Daniel SMITH महोदयेन "The "Three Gems" of Pāñcarātrāgama Canon"[६] इत्यस्मिन् लेखे पंचरात्रे रत्नत्रयत्वेन प्रथितानां <u>जयाख्य</u> -<u>सात्वत</u>- <u>पौष्करसंहिता</u>नां प्रतिपाद्यविषय उपकल्पितः ; <u>पांचरात्र</u>-प्रासादप्रसाधनम् इति विषये पाद्मसंहितायाः क्रियापादस्य दशाध्यायाः [१-१०], <u>A Source book of Vaiṣṇava Iconography</u> संज्ञा वैष्णवबिम्ब-निर्माणविधायकः विविधपंचरात्रसंहितागतानां बिम्बलक्षणपराणां ग्रन्थभागानां संकलनात्मकः कश्चन संग्रहग्रन्थश्चेति पुस्तकद्वयं च मुद्रापितम् ।

५. See <u>Encyclopedia of Relilgion and Ethics</u>- Vol. VII pp. 193-7 by JAMES HASTINGS, 1959.
६. See <u>Vimarśa</u> I. 1. [to be published], Kendriya Sanskrit Vidyapeetha, Tirupati, 1970.

शोधेऽस्मिन् उपयुक्ताः संहिताः

१. मुद्रितग्रन्थानां [मुद्रग्रन्थानां] संहिताः

अनि. अनिरुद्धसंहिता, मैसूर, १९५६ – देवनागरी – श्रीमता आसुरि श्रीनिवाससुदर्शनाचार्यमहोदयेन संपादिता ।

अ. सू. अष्टाध्यायीसूत्रपाठः, बंबई, १९१० – देवनागरी – श्रीमता पणशीकरोपाह्वलक्ष्मणशर्मसूनुना वासुदेवशर्ममहोदयेन संपादितः ।

अहि. अहिर्बुध्न्यसंहिता, अड्यार, १९१६ – देवनागरी – श्रीमता एम्.डी. रामानुजाचार्यमहोदयेन संपादिता ।

आ. आनन्दसंहिता, ईगाना ट्रिप्लिकेनम्, १९२४ – तेलुगु – वैखानसग्रन्थमालान्तर्गता ।

ई. ईश्वरसंहिता, काञ्चीपुरम्, १९२३ – देवनागरी – श्रीमता पी.बी. अनन्ताचार्यमहोदयेन संपादिता ।

ऋ. ऋग्वेदः [सभाष्यः] पुना, १९३३ – देवनागरी – श्रीमता सोन्टक्के उपाह्वयेन नारायणशर्मणा संपादितः ।

– – – – होशियारपुरम् १९६३,४ – देवनागरी – श्रीमता विश्वबन्धुमहोदयेन संपादितः ।

कपि. कपिञ्जलसंहिता, मद्रासनगरम्, १९३१ — तेलुगु — श्रीमता पोडिचेटि श्रीजगन्नाथाचार्यमहोदयेन संपादिता ।

कु. सं. कुमारसम्भवम्, नवदेहली, १९६२ — देवनागरी — श्रीमता सूर्यकान्त महोदयेन संपादितम् ।

ज. जयाख्यसंहिता, बडौदा, १९६७ — देवनागरी — श्रीमता एम्बार् कृष्णमाचार्यमहोदयेन संपादिता ।

जै.मी.सू. जैमिनीयमीमांसासूत्रपाठः, वाई — सतारा, १९४८, — देवनागरी — श्रीमता केवलानन्दसरस्वतीमहोदयेन संपादितः ।

तै. आ. तैत्तिरीयारण्यकम्, पूना, १९२७ — देवनागरी — श्रीमता बाबाशास्त्री फडकेमहोदयेन संपादितम् ।

ना. प. [आग.]प्र. नारदपञ्चरात्रम् [ज्ञानामृतसारः] — प्रथमरात्रम् — वेङ्कटेश्वर-मुद्रणालयः, बंबई — देवनागरी ।

पर. परमसंहिता, बडौदा, १९४० — देवनागरी — श्रीमता डा. एस्. कृष्णस्वामि अय्यङ्गार्महोदयेन संपादिता ।

पा.[क्रि.] पारमेश्वरसंहिता [क्रियाकाण्डः], श्रीरङ्गम्, १९५३ — देवनागरी — श्रीमता गोविन्दाचार्यमहोदयेन संपादिता ।

भाग. श्रीमद्भागवतम्, बम्बई, १९१० – देवनागरी – श्रीमता नारायण
राम आचार्यमहोदयेन संपादितम् ।

मनु. मनुस्मृतिः, बंबई, १९०२ – देवनागरी – श्रीमता पणशीकरोपाह्वेन
लक्ष्मणसूनुना वासुदेवशर्ममहोदयेन संपादिता ।

म. भा. महाभारतम् [शान्तिपर्व], पूना १९५४ – देवनागरी – श्रीमता
श्रीपादकृष्णबेलवलकरमहोदयेन संपादितम् ।

ल. सं. लक्ष्मीतन्त्रम्, अडेयार्, १९५९ – देवनागरी – श्रीमता वी. कृष्णमाचार्य-
महोदयेन संपादितम् ।

वा. रा. वाल्मीकिरामायणम्, बडौदा, १९६० – देवनागरी – श्रीमता
जी. एच्. भट्टमहोदयेन संपादितम् ।

वि. विष्णुसंहिता, त्रिवेन्द्रम्, १९२५ – देवनागरी – श्रीमता टी.
गणपतिशास्त्रिमहोदयेन संपादिता

वि. क. विमानार्चनाकल्पः, मद्रपुरी, १९२६ – देवनागरी – श्रीमद्भ्यां
रघुनाथचक्रवर्तिभट्टाचार्य शेषमाधवाचार्यमहोदयाभ्यां संपादितः ।

वि. ति. विष्णुतिलकम्, बेंगलूर, १८९६ – तेलुगु – श्रीमता को. ई.
राघवाचार्यमहोदयेन संपादितम् ।

२ हस्तलिखितग्रन्थानां [Manuscripts] संकेताः

अग. अगस्त्यसंहिता. Ms. R 5059, PL-Tel-Inc. GOML, Madras.

चि. शि. चित्रशिखण्डिसंहिता. Ts. KSV 576, Paper-Tel-Inc.

नार. नारदीयसंहिता. Ms. KSV 12, PL-Gr-Inc.

भा. भारद्वाजसंहिता. Ts. Paper-Gr-Inc. Srivaikuntham

भार्ग. भार्गवसंहिता, Ts. 6275, Paper-DN. SVOI, Tirupati

मा. मार्कण्डेयसंहिता. Ts. KSV 543, Paper-DN, Tel-Inc.
Ts. 1817, Paper-DN-Inc. SVOI, Tirupati

वा. वासिष्ठसंहिता. Ms. KSV 27, PL-Gr-Inc.

वि. तं. विष्णुतन्त्रम्. Ts. TR 577, Paper-DN-Inc. Adyar
Ts. KSV 570, Paper-Tel-Inc.

वि. त. विष्णुतत्त्वसंहिता -पाद ३. Ts. 73680, Paper-DN-Inc. Adyar

विष्व. विष्वक्सेनसंहिता. Ms. KSV 20, PL-Gr-Inc.

विह. विहगेन्द्रसंहिता. Ts. KSV 513, Paper-Tel-

शा. शाण्डिल्यसंहिता।

सनत् [ऋषि] सनत्कुमारसंहिता [ऋषिरात्रम्]। Ts. KSV 612, Paper-DN-Inc.

३ [illegible]

| | |
|---|---|
| छि. प. | – छिद्रात् परम् । |
| छि. पू. | – छिद्रात् पूर्वम् । |
| पृ. | – पृष्ठम् । |
| रे. चि. | – रेखाचित्रम् । |
| श्लो. | – श्लोकः । |
| DN | = Devanāgarī |
| GOML, Madras | = Government Oriental Manuscripts Library Madras. |
| Gr. | = Grantha. |
| Inc. | = Incomplete. |
| KSV. | = Kendriya Sanskrit Vidyapeetha, Tirupati. |
| MS. | = Manuscript. |
| O I, Baroda | = Oriental Institute, Baroda. |
| PL. | = Palm – leaf. |
| SVOI, Tirupati | = Sri Venkateswara Oriental Institute, Tirupati. |
| Tel. | = Telugu. |
| Tc. | = Transcript |

[illegible]

1 S.K.IYANGAR " Sāttvatās " 2nd AIOC Calcutta ,1923.

2 P.P.APTE , Pāñcarātra Saṁhitās -A study , Ph.D., Thesis , University Of Poona ,1965, (to be published ).

3 R.G.BHANDARKAR , Vaiṣṇavism ,Śaivism and Minor Religious Systems , Nepālī Khapra Vārāṇasī, 1965.

4 N.R.BHATT , Ed., Ajitāgama , Institut Français D'Indologie , Pondichéry , 1964.

5 S.R.BHATT , The Philosophy of Pāñcharātra ,Madras 1969.

6 Helene BRUNNER -LACHAUX , Ed., Somaśambhupaddhati Institut Français D'Indologie Pondichéry ,@ 1963.

7 S.K.DE , "Pāñcarātra and the Upanishads " Ind .Hist. Quart IX

8 HERMANN JACOBI " Incarnation (Indian) " Encyclopedia of Religion and Ethics Vol .VII pp .193-7,1959.

9 S.M.KATRE , Introduction to Indian Textual Criticism Poona,1954.

10 V.RAGHAVAN , "The name Pāñcarātra with an analysis of the Sanatkumāra Saṁhitā in manus-

# प्रथमोऽध्यायः

## १ . . . . . पृष्ठभूमिविचारः

### १.१.० आगमः :

अनादिनिधने संसारे अध्यात्मविद्याया आकरे, वेदे, आगमे, पुराणे च अविशेषसाधारणं स्थानम् आवहति भारते विलसन्ति नैकविधाः श्रेयःप्रेयःप्रतिपादका ग्रन्थसंदर्भाः । एतत्क्रमेण पुरुषार्थसिद्धिरिति तु निश्चयम् । ऐहिकामुष्मिकश्रेयःसाधनानां प्रतिपादकानां वेदादीनां प्रचारे बहुभूरिभिः प्राचीनैः ऋषिभिः गुरुशिष्यपरम्परया प्रवर्तिता नानाविधाः सम्प्रदायविशेषाः । तेषाम् अन्यतमोऽयम् आगमसम्प्रदायः ।

आङ् पूर्वकाद् गम्यर्थकाद् गमधातोः

ग्रहवृदृनिश्चिगमश्च [अ.सू. ३-३-५८]

इति अनुशासने निष्पन्नोऽयम् आगमशब्दः सम्प्रदायसिद्धं ग्रन्थजातम् अभिधत्ते । " गत्यर्थकानां ज्ञानार्थकत्वम् " इति न्यायेन सृष्टि-प्रलय-देवतार्चन-मन्त्रपुरश्चरण-ध्यान-योगादिषु प्रतिपादकेषु ज्ञानविशेषात्मका ग्रन्थविशेषा आगमपदेन व्यवह्रियन्ते । अत्र शब्दकल्पद्रुमे [प्रथमकाण्डे] तन्त्रशास्त्रादुद्धृताः[1],

---

१. मत्स्यपुराणे तु –

आगतं शिववक्त्रेभ्यः गतं तु गिरिजामुखम् ।
मतं श्रीवासुदेवेन तस्मादागममुच्यते ॥

इत्ययं श्लोकः दृश्यते इति श्रीमता नं. वेङ्कटेश्वरशर्मणा " देवालयेषु वर्णना "[Souvenir, Āgama Silpa ..... Secundarabad, 1968, p.91] इत्यत्र सूचितम् ।

१.१.२.२ प्रथमं प्रमदानां तु द्वितीयं चित्रकारकम् ।

तृतीयं निन्दकानां तु चतुर्थं भावकारकम् ॥

पंचमं ज्ञानिनां तु पंचरात्रमिति स्मृतम् ।

[भा. २.१२,३]

१.१.२.३ रात्रिरज्ञानमित्युक्तं पंचेत्यज्ञाननाशकम् ।

तस्मात्तु पांचरात्रं स्यादन्वर्थस्यानुरोधतः ॥

[पौष्क. २.४०]

रात्रं च नामज्ञानं ज्ञानं पंचविधं स्मृतम् ।

तेनेदं पंचरात्रं च प्रवदन्ति मनीषिणः ॥

पा. सं. [ज्ञाना.]प्र.१.४४ ।

१.१.२.४ अथ वक्ष्यामि विप्रेन्द्र पंचरात्रार्थमुत्तमम् ।

पृथिव्यादीनि भूतानि गुणाः पंच महामते ।

रात्रयो जन्तवः प्रोक्ताः सर्वाण्येषु निविष्टाः ।

रूपभोगादिनिवृत्तिषु पंचरात्रमिति स्मृतम् ।

[कपि. १. ३९-४]

महाभूतगुणाः पंच रात्रयो देहिनः स्मृताः ।

भोगादिनिवृत्तेर्वा पंचरात्रमिति स्मृतम् ।

भूतमात्राणि गर्भस्य बुद्धिरव्यक्तमेव च ।

रात्रयः पुरुषस्योक्ताः पंचरात्रं ततः स्मृतम् ।

[पर. १.३९-४१]

इत्युपस्थापयन्ति ।

सात्वतविध्यपराभिधानोऽयं पंचरात्रसम्प्रदायः द्वापरयुगस्यान्ते कलियुगादौ च संकर्षणेन प्रवर्तित इत्यत्र पाद्मतन्त्रं प्रमाणमाम्नातम् । यथा -

द्वापरस्य युगस्यान्ते आदौ कलियुगस्य च ॥
साक्षात् संकर्षणाद् भक्तात् प्राप्य एवं महत्तरः ।
एष एकायनो वेदः प्रख्यातः सात्वतो विधिः ॥ इति ।

[पा. [श्री.] १. ३३,६]

महाभारते [ख्रि. पू. ३०० - ख्रि. प. ३००] शान्तिपर्वणि पंचरात्रस्वरूपं परामृश्यते । " नारायणमुखोद्गीतः नारदेन श्रावितः नारायणपरात्मकः एकान्तिधर्मविशेषतः श्रीहरिव्यापकोऽयं पन्था " इत्यभिप्रैति पंचरात्रमधिकृत्य महाभारतम् । यथा -

इदं महोपनिषदं चतुर्वेदसमन्वितम् ।
सांख्ययोगकृतं तेन पंचरात्रानुशब्दितम् ॥
नारायणमुखोद्गीतं नारदोऽश्रावयत् पुनः ।
ब्रह्मणः सदने तात यथादृष्टं यथाश्रुतम् ॥

[म. भा. १२. ३२६.१००,१]

एवमेकं सांख्ययोगं वेदारण्यकमेव च ।
परस्पराङ्गान्येतानि पांचरात्रं च कथ्यते ।
एष एकान्तिनां धर्मो नारायणपरात्मकः ॥

[op.cit. ३३६. ७६]

सांख्यं योगं पंचरात्रं वेदाः पाशुपतं तथा ।
ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै ॥

[op.cit. ३३७.५९]

तन्त्रम् १२३ ब्रह्माण्डतन्त्रम् १२४ ब्राह्मतन्त्रम् १२५ भागवततन्त्रम् १२६
भारद्वाजतन्त्रम् १२७ भार्गवतन्त्रम् १२८ भूमिसंहिता १२९ मत्स्यसंहिता
१३० मधुसूदनसंहिता १३१ मनुसंहिता १३२ महाकालतन्त्रम् १३३ महापुरुष-
संहिता १३४ महालक्ष्मीसंहिता १३५ महासनत्कुमारतन्त्रम् १३६ महीप्रश्नतन्त्रम्
१३७ माधवतन्त्रम् १३८ मान्दरतन्त्रम् १३९ मायातन्त्रम् १४० मायावैभविक-
तन्त्रम् १४१ मारीचतन्त्रम् १४२ मार्कण्डेयतन्त्रम् १४३ माहेन्द्रसंहिता १४४
मिहिरतन्त्रम् १४५ मुकुन्दतन्त्रम् १४६ मूलसंहिता १४७ मेदिनीपतिसंहिता
१४८ मेरुतन्त्रम् १४९ मैत्रेयतन्त्रम् १५० मौद्गलतन्त्रम् १५१ यज्ञमूर्तितन्त्रम्
१५२ याज्ञवल्क्यतन्त्रम् १५३ याम्यतन्त्रम् १५४ योगतन्त्रम् १५५ योगहृदय-
तन्त्रम् १५६ राघवतन्त्रम् १५७ रुद्रतन्त्रम् १५८ रौमशतन्त्रम् १५९ लक्ष्मी-
तन्त्रम् १६० लक्ष्मीविशिष्टसंहिता १६१ लक्ष्मीनारायणतन्त्रम् १६२ लक्ष्मीपति-
तन्त्रम् १६३ लांगलतन्त्रम् १६४ लिङ्गतन्त्रम् १६५ वसुतन्त्रम् १६६ वागीश-
तन्त्रम् १६७ वामदेवतन्त्रम् १६८ वामनतन्त्रम् १६९ वायवीयतन्त्रम् १७०
वाराहतन्त्रम् १७१ वारुणतन्त्रम् १७२ वाल्मीकिसंहिता १७३ वासिष्ठ-
तन्त्रम् १७४ वासुदेवतन्त्रम् १७५ विज्ञानतन्त्रम् १७६ विरिञ्चिसंहिता १७७
विश्वसंहिता १७८ विश्वामित्रतन्त्रम् १७९ विष्णुसंहिता १८० विष्णु-
तन्त्रम् १८१ विष्णुतत्त्वतन्त्रम् १८२ विष्णुतिलकतन्त्रम् १८३ विष्णुयोग-
तन्त्रम् १८४ विष्णुरहस्यतन्त्रम् १८५ विष्णुवैभविकतन्त्रम् १८६ विष्णुसिद्ध-
तन्त्रम् १८७ विष्णुसद्भावतन्त्रम् १८८ विष्णुसारतन्त्रम् १८९ विष्णुसिद्धान्त-
तन्त्रम् १९० विष्वक्सेनतन्त्रम् १९१ विहगेन्द्रसंहिता १९२ वीरमोहिततन्त्रम्

प्राधान्येनोपवर्ण्यते । वीतरागजनमनानां संघानां भगवत्प्राप्त्यै इदमेकमात्र-इति पांचरात्रम् । भगवत्प्राप्त्युपायानां ज्ञानयोगक्रियाचर्याणां सविस्तरमुपवर्णनं पांचरात्रे संभवति ।

तत्र पांचरात्रशास्त्रावतरण -पंचरात्रपदार्थ -पंचरात्रशास्त्रप्रामाण्य-[illegible]याथातथ्यदुःखादिहेतुविवेचन - विद्यान्यपदार्थनिर्देश- आनुकूल्यादिविवेचन -प्रकृति-पुरुषादिविवेक-जगत्सृष्टिस्थितिसंहारनिरूपण - भुवनकोशविवरण - वैकुण्ठ-लोकोपवर्णन-वर्णाश्रमविवेचनादिविषयको भागो ज्ञानपाद इति वा प्रथमपाद इति वा परिगण्यते ।

आत्मोन्नतिसाधकानां नाड्यादिप्रकारविशेषोपन्यासकानां यमनियमादीनां योगाङ्गानां विवेचको भागो योगपाद इति वा द्वितीयपाद इति वा कीर्त्यते ।

भगवत्सान्निध्यस्थानाया अर्चायाः प्रतिष्ठापननिर्देशको भगवदालय-निर्माणक्रमविवेचनपरो भागः क्रियापाद इति वा तृतीयपाद इति वा अभिधीयते, यत्र वा आचार्यवरण - भूपरीक्षा - वास्तुनिर्माण - कर्षणादिप्रतिष्ठान्तानां क्रियाकलापानां सविस्तरं वर्णनमुपलभ्यते ।

आचारार्चनपरो चर्याविधिविवेक - वैष्णवदीक्षाप्रकार -भगवदाराधन-क्रम - मानसयागविवेक- मुद्राप्रदर्शनप्रकार - अग्निकार्यप्रकार -नित्योत्सवक्रम - मण्डलयागप्रकार - स्नपनप्रकार - महोत्सवाचरणक्रम - पवित्रारोपणविवेचन -दिन-विशेषार्चनप्रकार - व्रतविशेषाचरणक्रम -अन्त्येष्टिप्रकार -मन्त्रोद्धारप्रभृतीनां भगवदर्चनसंबन्धिनां विषयाणां विवेचको भागश्चर्यापाद इति वा चतुर्थपाद इति

४ १७-१०२ A. मध्ये च बलसंयुतम् ।

B. "

M. "

K. मध्ये पञ्चविंशत्यम् ।

My. "

तथा च अधोलिखिता रीत्या एता मातृकाः वर्गीकरणमर्हन्ति ।




२.१.४. विश्वामित्रसंहिताकालः

विश्वामित्रसंहिताया उल्लेखः संहितान्तरेषु न प्रचुरतरः । कपिञ्जलसंहितायां [१. ३२], पुरुषोत्तमसंहितायां [१. ३०], भारद्वाजसंहितायां [१. १६], मार्कण्डेयसंहितायां [१. ३२], विष्णुतन्त्रे [१. ६६] चैवमेषु पंचरात्र संहितासु अष्टोत्तरशतसंहितानां परिगणने विश्वामित्रसंहिता निर्दिश्यते ।

पंचरात्रकोशे प्रथिते रत्नत्रये, श्रुतास्थासु वा अन्यान्यनिर्देशेषु विश्वामित्रसंहिता ख्यातनामा संहितेति बहवः स्वीकुर्वन्ति । अत्र पाश्चात्यविदुषः डेनियल स्मिथ महोदयस्य वाक्यानि परिशीलनमर्हन्ति । तेन हि[11] " पुराणैः

11. See A Source book of Vaisnava Iconography, p.393.

३. ११ नित्योत्सवः [पवित्रारोपणम्]

नित्याराधनानित्या पवित्रारोपणात्पराधीनो नित्योत्सवः प्रायः सर्वासु च पंचरात्रसंहितासु निर्दिश्यते । नित्योत्सवोऽयं परिवारदेवतापरिचिन्तकः । नित्योत्सवप्रकरणेऽस्मिन् पादुकादीनां द्वारदेवतानां, चण्डादिद्वारपालानाम्, आवरणदेवानां च स्वरूपमुपवर्ण्यते । विश्वामित्रसंहितायां नित्योत्सवपरो भागः [१२] पाद्मसंहितया नित्योत्सवविषयकेण भागेन [च.४] तुलनां साम्यमावहति ।

३. १२.०. मुद्रादर्शनम्

पंचरात्रसंप्रदाये भगवदाराधने मुद्रादर्शनस्यानिवार्यता विधीयते। मन्त्रजपस्येव मुद्रादर्शनस्यापि गोपनीयता निर्दिश्यते [१३.३.४, पाद्म [च] २२.३, पु ३३.२.३, वि.७.३२.३, कपि. २७.३,पर. १३.३६]। वैखानससंप्रदाये जपध्यानकालयोर्मुद्रादर्शनं पांचरात्रिकैः वैशिष्ट्येन क्रियते, अपि तु, विना मुद्रादर्शनं मंत्रजपितं पूर्णं भगवदाराधनं न स्यादित्यप्युच्यते इति निर्दिश्यते [१३. ३.४]।

अंगुलिसमायोगभेदेन बद्धा विन्यस्ता मुद्रा दुष्टानां मुदं द्रावयति, देवान् प्रीणयति च [१३.२.३]। मुद्रापदे दुष्टानां मुदाते मुदः, द्रावणो द्रावणस्य बोधकात् इत्यभिप्रयन्ति तान्त्रिकाः । अनुकूलद्रावणपूर्वकं देवप्रीतिजनकः अं अंगुलिसमायोगविशेषो मुद्रेति पांचरात्रिणां मतम् [१३.२.३; पाद्म [च.] २२.२.३; पु. ३३. २; अप्र. ५४. ६२,३; वि ७.३५.६; ई.२३. २,३; पर. १५.२; विष्व १९. ६,७]। विष्णुसंहिता मुद्राणामानन्त्यं निर्दिशति [७.३६]।

## ६. स्नपन - उत्तमोत्तम - कलशकलान - [Text - p. १२२]

१९. १२६ - ३९

उ-



















प-
















पू-



















द-

## ७. स्नपन – उत्तममध्यम – कलशाकलन – [Text-p.122,4]

१९.१३९

उ-

24




25

16




17

प-
















पू-

13




11

23




22



द

## ९. स्नपन- पञ्चविंशतिकलश- कलशकल्पन -[Text-p.१२५,६]

२१·१६१-६-

उ-

| | | | | | | |
|---|---|---|---|---|---|---|
| 15 | | | 16 | | | 17 |
| | | | | | | |
| | | 7 | 8 | 9 | | |
| प- 14 | | 6 | 1 | 2 | | 10 पू- |
| | | 5 | 4 | 3 | | |
| | | | | | | |
| 13 | | | 12 | | | 11 |

द-

## १०. स्नपन- सप्तदशकलश - कलशकल्पन- [Text-p.१२६]

१९.१७२-४

उ-

| | | | | |
|---|---|---|---|---|
| 15 | | 16 | | 17 |
| | 7 | 8 | 9 | |
| प- 14 | 6 | 1 | 2 | 10 पू- |
| | 5 | 4 | 3 | |
| 13 | | 12 | | 11 |

द-

११. स्नपन- षोडशकलश- कलशकल्पन -[Text - p. १२६]

१९.१७६-८१.

उ-

13 | 14 15 | 16

प- 12 / 11 | 3 4 / 2 1 | 5 / 6 पू-

10 | 9 8 | 7

द-

१२. स्नपन - द्वादशकलश- कलशकल्पन-[Text - p. १२६,७]

१९.१८१-३

उ-

10 | 11 | 12

प- 9 | 3 4 / 2 1 | 5 पू-

8 | 7 | 6

द-

१३. स्नपन - नवकलश - कलशकल्पन - [Text - p. 127]

११. १८८,८

उ-

| | | | | |
|---|---|---|---|---|
| | 7 | 8 | 9 | |
| प- | 6 | 1 | 2 | पू- |
| | 5 | 4 | 3 | |

द-

१४. स्नपन - पञ्चकलश - कलशकल्पन - [Text - p. 127]

११. १८९-९१

उ-

| | | | | |
|---|---|---|---|---|
| | | 5 | | |
| प- | 4 | 1 | 2 | पू- |
| | | 3 | | |

द-

केनैव पंचगव्यस्नानयुतेन कालेन स्नपनं विधीयते [१९. १९२] बौधायना विकल्पना-भावादस्य रेखाविशेषः नोपदर्श्यते ।

सदैवकुम्भस्थापनादिनिमित्तस्य दोषनिरासार्थकस्य स्नपनस्य अष्टादश प्रभेदाः विष्वक्सेनसंहितायामुपलभ्यन्ते । स्नपनभेदनिर्देशे विष्वक्सेनसंहिता पारमेश्वरसंहितया ईश्वरसंहितया च विसदृशी , पाद्मसंहितया संवदति च । पारमेश्वरसंहितायां स्नपनं विस्तरेण वर्ण्यते । तत्र पर-अपरभेदेन विभक्ते स्नपने, परभेदे दश, अपरभेदे पञ्चाष्टकोपेते षड्विंशत् – इत्येवं षट्त्रिंशद् भेदा उपवर्ण्यन्ते [पा. [कि.] १४. २८ -२१३]। ईश्वरसंहितायां तु पारमेश्वरसंहितायां निर्दिश्यमाना भेदाः संगृहीताः । तत्र परभेदे दश , अपरभेदे, पारमेश्वरसंहितोक्तानां षड्विंशद्-भेदानां स्थाने नवैव भेदाः –इत्येवं नवदशभेदा उपदिश्यन्ते [ई. १७. २८-१११] पाद्मसंहितायां तु परस्परासमन्वयात्पूर्वैव कश्चन नूतनः पन्था निर्दिश्यते । तत्र पर-अपरयोः पन्थाः नैवोपदिश्यते । उत्तम –मध्यम –अधमभेदेन प्रथमतस्त्रैविध्यं, त्रिविध-स्यास्यास्य पुनः प्रत्येकमुत्तमादिभेदेन त्रैविध्यम्, तथा च स्नपनं नवविधमिति प्राधान्येन परिगण्यते [पाद्म [च.] ८.७, १८१] । स एवायं पन्था विष्वक्सेनसंहितया अनुस्रियते । एतेनैव क्रमेण विष्वक्सेनसंहिता स्नपनभेदान् प्रस्तौति प्रतीयते [विष्व. २२. १४,७. ११,६ ,७७-९]। पाद्मविष्वक्सेनसंहितयोरुपदिश्यमानः स्नपनप्रकारोऽयम् उपपन्नः सुस्पष्टश्च संदृश्यते ।

३. १८ सहस्रकलशस्नपनम्

सर्वपापविनाशकं विजयाभीष्टार्थं च सहस्रकलशस्नपनं विष्वक्सेनसंहितायां पारमेश्वरादिसंहितान्तरापेक्षया विलक्षणया रीत्या

पञ्चगव्यकलशाः, कोणगतेषु नवाग्रांकितेषु कोष्ठेषु आग्नेयादिक्रमेण क्षीर-दधि-मधु-कषायजलकलशाः, शिष्टेषु चतुःषष्टि-कोष्ठेषु शुद्धोदकलशाः -इत्येवं ब्रह्मभागे एकाशीतिकलशान् [द्रव्यकलशाः १७ + शुद्धोदकलशाः ६४] कल्पयेत् ।

दैवतभागगतेषु सप्तदशकलशान्यदकोष्ठयुतेषु अष्टासु स्थानेषु नवाग्र-चिह्नांकितानां कोष्ठानां, प्राच्यादिदिक्चतुष्क गतेषु चतुर्षु, प्राच्यादिक्रमेण, गन्धोदकजल-कुंकुमजल-कर्पूरजल-उशीरजलकलशाः, कोणेषु नवाग्रचिह्नितेषु चतुर्षु कोष्ठेषु, आग्नेयमारभ्य क्रमशः, विल्वैल-आमलकैल-सिद्धार्थैल-धन्वन्तरैलकलशाः, शिष्टेषु अष्टाविंशत्यधिकशतकोष्ठेषु शुद्धोदकलशाः -इत्येवं दैवतभागे षट्त्रिंशदधिकशतकलशान् [द्रव्यकलशाः ८ + शुद्धोदकलशाः १२८] स्थापयेत् ।

मानुषभागे पूर्वादिचतुर्दिक्षु एकोनपंचाशत्कोष्ठानां नवाग्रचिह्नित-कोष्ठेषु, पूर्वादिदक्षिणान्तं क्रमेण, गुडजल-इक्षुरस-नारिकेलजल-दाडिम्बादि-कलशाः, आग्नेयादिकोणेषु नवाग्रांकितेषु कोष्ठेषु, आग्नेयादीशान्यान्तं, मोच-चक्कलकलशाश्चत्वारः उपदिशन्ति, इन्द्रवरुणमध्यमारभ्य प्रदक्षिणक्रमेण नवाग्रचिह्नितेषु कोष्ठेषु, हिमतोय-शिलाम्भस्-तण्डुलजल-तिलजल-वृष्टितोय-पुष्पाम्भस्-सुवर्णाम्भस्-समुद्राम्भः कलशाः, शिष्टेषु अष्टषष्ट्यधिकसप्तशतकोष्ठेषु शुद्धोदकलशाः -इत्येवं मानुषभागे चतुरशीत्यधिकसप्तशतकलशान् [द्रव्यकलशाः- १६ + शुद्धोदकलशाः ७६८] कल्पयेत् ।

तदित्थं सहस्रकलशस्नपने द्रव्यकलशाः एकचत्वारिंशत् [१७ + ८ + १६] शुद्धोदकलशाः षष्ट्यधिकनवशत [६४ + १२८ + ७६८] मिति एकाधिकसहस्रं कलशाः कल्पनीयाः । स्नपनमिदं सहस्रकलशस्नपनमित्यभिधीयते [१०. ८-२८]।

धार्मिकः शिल्पिनः, शिल्पशास्त्रमनुपेतस्य यजमानस्य च सहयोगः मुख्यतामपेक्ष्यते । आलयनिर्माणे गुरुशिल्पिनोः सम्प्राधान्यमुपदिश्यते यतो हि प्रासादनिर्माणारम्भे गुरुं शिल्पिनं च यजमानः पूजयेदिति [२१, १२२] गुरुशिल्पिनोः पूजनं विधीयते । गुरुशिल्पिभ्यां निर्मीयमाणो देवालयः यजमानस्य ग्रामस्य च अभ्युदयनिःश्रेयसयोः साधक इति पाञ्चरात्रिणामभ्युपगमः [२१, २,३,१२२,३] ।

विषयाभिसंहितैषा प्रासादनिर्माणक्रमं, आलये प्रतिष्ठाप्यानां बिम्बानां लक्षणं, जीर्णानां बिम्बानामालयानां वा पुनरुज्जीवनप्रकारं च समासेन उपदिशति । यथा हि -

३. ११. १ प्रासादनिर्माणम्

प्रासादनिर्माणविषयके एकविंशाध्याये उपादानद्रव्यानुरोधेन प्रासादस्य उत्तम-मध्यम-अधम-क्षुद्रारचना विभजनं, आलयनिर्माणार्थं निर्दिष्टस्य भूभागस्य शोधनं, अष्टदिङ्निर्णयपूर्वकं निम्नपदार्चनं, बालालयनिर्माणं, आद्येष्टकान्यासः, आलयेषु तलसंख्याविवेकः, आकृतिभेदेन प्रासादस्य नागर-द्राविड-वेसर-भेदेन त्रिधाभावः, प्रथमादितलपञ्चतलान्तं स्थापनीयानां विभिन्नमूर्तीनां विवेचनं, देवालयं परितः पानीयशालादिकल्पनं, गर्भन्यासक्रमः -इत्येते प्रासादनिर्माणसम्बन्धिनः प्रधानांशाः संक्षेपेण व्याख्यायन्ते [२१, ४-१२१] ।

३. ११. २ बिम्बकल्पनम्

बिम्बनिर्माणविषयके द्वाविंशाध्याये, बिम्बनिर्माणे उपादानद्रव्यस्य मणि-शिला-लोहभेदेन त्रिविधत्वं, बिम्बार्थं शिलालक्षणं, आलयेषु प्रतिष्ठाप्यस्य स्थानक-आसन-शयनसंज्ञकैः स्थानविशेषैर्निर्मीयमाणस्य भूबेरस्य,

कर्मार्चादिवैलक्षण्यकथनं , मूर्धेष्टीकथनं विभिन्नप्रमाणविशेषाः –इत्येते विचाराः प्रस्तूयन्ते [२२.२ –३७]। पाञ्चरात्रसंहितान्तरसंवादेन बिम्बार्थकशिलासंग्रहणे शिलायाः वारुणी–आग्नेयी –माहेन्द्री –वायवीभेदेन चातुर्विध्यमुपवर्णयन्ती विश्वामित्रसंहिता प्राचीनानां मूर्धाभ्युपगमानुपदर्शयतीव [२२. ३,४]। अत्र निर्दिश्यमानं प्रतिमांगोपांगमानम् अपूर्णमिव भाति [ २२.६१–७],यतो हि उत्तमदशतालानुरोधेन अधमदशतालानुरोधेन चेति द्विप्रकारमेव मानमत्रोपदिश्यते । तत्रापि अधमदशतालानुरोधि बिम्बांगोपांगमानमत्यल्पार्थमुपदृश्यते [ २२. ६५ –७]। मध्यमदशतालानुरोधिनः प्रतिमांगोपांगमानस्य पुनरत्र नामापि न श्रूयते । पाद्म-संहितायां प्रतिमानाम् अंगोपांगमानम् उत्तमदशतालानुरोधेन, मध्यमदशतालानुरोधेन, अधमदशतालानुरोधेनेति त्रिधा उपदिश्यते [पाद्म [क्रि] २०.५ –२३ । भार्गव-संहिता च पाद्मसंहितावदेवाभिप्रैति [भार्ग. ४.१०–२१]। तथा च विश्वामित्रसंहि-तायां बिम्बांगोपांगमानं संक्षिप्तमिति वा, मध्यमदशतालानुरोधिमानपरो ग्रन्थ-भागः लुप्त इति वा अभ्युपगन्तव्यं भवति ।

### ३. ११. ३ जीर्णोद्धरणम्

बिम्बानां देवालयानां वा अंशतः कृत्स्नतो वा भिन्नानां जीर्णानां वा पुनरुद्धारणमनिवार्यमिति पंचरात्रसंहितासु बोध्यते । जीर्णानां बिम्बादीनां पुनरुद्धारप्रकारः विश्वामित्रसंहितायां समासेनोपवर्ण्यते । यथा हि-

स्वायंभुवानां दिव्यानाम् आर्षाणां मानुषाणां [अभिमानानां] च प्रतिमानां केनचित् कारणेन जीर्णौ, हेम्ना समादध्यात् [२३.२,३]। जीर्णोद्धारेऽस्मिन् जीर्णबिम्बगतां शक्तिम् अन्यत्र बिम्बे कुम्भे वा

आगारस्य जीर्णाङ्गं पुनः-प्रतिष्ठां वा कुर्यात्। चलसमाधानस्य बिम्बस्य त्यागः सर्वथा नोचितः, अचलसमाधानस्य पुनः भूमौ खनन खननं जलाधिवासं वा समुचितम् [२३. ६,७,१४]। पुनःप्रतिष्ठाकार्यस्य समाधानस्य वा समाप्तौ पूर्वमन्यत्रावस्थितं बिम्बं यथास्थानं निवेशयेत्।

जीर्णस्य भवनस्य वा प्रासादस्य पुनःसृष्टौ, तत्प्रासादगतं भगवन्तं जीर्णोद्धारावधि कल्पिते बालालये निवेश्य पूजयेत्, जीर्णोद्धारसमाप्तौ पुनस्तं यथास्थानं स्थापयित्वा अर्चयेत् [ २३. १४ ]। बिम्बस्य आलयस्य वा पुनः प्रकल्पनं यथापूर्वमेव कार्यम् [ २३. २० ] -इत्येवं जीर्णोद्धारसंबन्धिनो मुख्यांशाः संग्रहेण <u>विष्वक्सेनसंहिता</u>यामुपवर्ण्यन्ते। बिम्बादिजीर्णोद्धारे <u>पाद्मसंहिता</u> विष्वक्सेनसंहितासमां दिशं दर्शयति [ पाद्म [ ४.]१७]

## २.२० पवित्रारोपणम्

आगमानुसारिषु देवालयेषु [ वैष्णवेषु ] सांवत्सरिकदोषनिवृत्तिप्रायश्चित्तात्मकः प्रतिवर्षं श्रावणभाद्रपदमासयोरन्यतरस्मिन् पवित्रारोपणसंज्ञकः कश्चन उत्सवः समाचर्यते [ २४.३ -४,५१,२ ]। उत्सवेऽस्मिन् कार्पाससूत्रनिर्मितैः कौशेयसूत्रनिर्मितैर्वा पवित्रैः देवालयगतानि मूलार्चादिबिम्बानि अलंक्रियन्ते [२४. ८३-६ ]। बिम्बेष्वारोपितानि च तानि पवित्राणि तत्तद्बिम्बादौ त्रिरात्रं, पंचरात्रं, सप्तरात्रं वा यथाप्रदेशं रक्ष्यन्ते। त्रिरात्रस्य पंचरात्रस्य सप्तरात्रस्य वा विरतौ तानि पवित्राणि बिम्बादिभ्योऽवरोप्यन्ते, आचार्याय दीयन्ते [२४. १७,८ ]। अनेन पवित्रारोपणेन देवालये मन्त्रक्रियादिलोपप्रयुक्ता दोषाः शाम्यन्तीति पंचरात्रागमः।

विस्तरेण पवित्रारोपणमुपदिशन्ती विश्वामित्रसंहिता मूर्तेरादि-देहेषु आरोपणीयानां प्रमाणं -गन्ध-अंकार-उत्तम-मध्यम-अधम-किरीट-श्रीवत्स-कौस्तुभ-वनमालादिभिः प्रथितानां पवित्राणां निर्माण प्रकारं [२४. २२ -३३ ], पीठादिदेवमूर्तिभ्यः विनियोज्यानां पवित्राणां प्रकमनक्रमं [ २४. ३३-४४ ], पवित्राधिवासादिकार्यकलापं, मण्डलादिविम्बमूर्तिभ्यः पवित्रारोपण-प्रकारं, विम्बेभ्योऽवतारितानां पवित्राणां विनियोगक्रमं [ २४.५७ -६० ] -इत्येवं पवित्रारोपणसंबन्धिनो विचारान् सुस्पष्टमुपवर्णयति । पाद्मसंहिता-यामुपदिश्यमानः पवित्रारोपणप्रकारो [च. १४. ३३ -११८ ] विश्वामित्रसंहिता-संवादी संलक्ष्यते ।

३. २१ <u>कह्लारकुसुमार्चनम्</u>

आलयेषु वसन्ते, शरदि, ज्येष्ठ -श्रावण-पुष्य-फाल्गुनमासेषु वा यजमानाभीप्सितार्थसिद्ध्यर्थं कह्लारकुसुमार्चनं विधीयते [ २५.३१-४ ]। अस्मिन् उत्सवे भगवान् कह्लारमालाभिर्विभूष्य संपूज्यते । अनेन गुरुतराणि ब्रह्महत्यादीनि पापानि निवर्तन्ते, आयुरारोग्यादिकं वर्धते, लक्ष्मीको भगवान् सुतरां तुष्यतीति पंचरात्रिणां प्रतीतिः [ २५.२०-३ ]।

पुरा विप्रविदलनोद्योगसंभावितं पापम् अभवत्; अनेन कह्लार-कुसुमार्चनेन निरस्य पूतात्मा बभूवेति [ २५.३-२४ ], एतत्संहितोपदेष्टा वसिष्ठा-नुमतो ब्रह्मर्षिर्विश्वामित्रः स्वसैवाभिवृद्धये भगवन्तं विधिवत् कह्लारकुसुमैरभ्यर्च्य स्वाभीष्टमवापेति ~~।२५.३-२४ ।, अथ~~ [ २५. २६-३० ] इत्येतिहासिकोपाख्यान-माध्यमेन कह्लारकुसुमार्चनमहिमा <u>विश्वामित्रसंहिता</u>यां प्रस्तूयते । संहितान्तरे

सेयं विश्वामित्रसंहिता पदार्थज्ञानजिज्ञासुभ्यः साधकेभ्यः पंचरात्रसिद्धान्तान् सुस्पष्टमुपदिशन्ती पंचरात्रे अनितरसाधारणं स्थानमधितिष्ठतीति निःसंशयम् ।

इतीत्थं पंचरात्रमहाम्भोधिमुद्धरन्निर्मितं सिद्धान्तामृतं मथित-पंचरात्रमहाम्भोनिधिना विश्वामित्रेण कारुण्यादोपकल्पितं सत् विश्वामित्रसंहिता ख्यात्या महीयते ।

# चतुर्थोऽध्यायः

## ४ . . . . वेदपंचरात्रयोः संबन्धः

### ४.१ पंचरात्रे वैदिकप्रभावः

वेदाध्ययनेऽधिकाररहितानां स्त्रीणाम् अनुलोमशूद्राणां च दीक्षादौ अधिकारमुपकल्पयति पंचरात्रमित्यतः केचित् शंकराचार्यादिनः पंचरात्रमवैदिकमाचक्षते । परं तु , विमर्शकास्तत्र न पश्यन्ति उपपत्तिं यतो हि पंचरात्रं वैदिकतान्त्रिकसम्प्रदायात्मकं लक्ष्यते । तदधिकृत्यात्र समासतः किंचिद् विचार्यते ।

भारतीयवाङ्मये विविध्य आध्यात्मिकग्रन्थजाते वेदानां प्रभावः सुस्पष्टमुपलभ्यते । तदाध्यात्मिकोन्नतिसाधके पंचरात्रे वेदानां प्रभाव अनिवार्य एवापतति । अन्यागमादिष्विव पंचरात्रे तान्त्रिकः प्रभावश्च अनिवार्यतया अंतर्गभवति । पंचरात्रे तान्त्रिकक्रियाकलापानां समावेशेऽपि वैदिकानां मन्त्राणां विनियोगो न हीयते । आत्मार्चनाङ्गभूता उपचारार्पणकल्पनादिक्रियाः पंचरात्रे वेदोक्तैरेव मन्त्रैः विधीयन्ते । वेदार्थानवगाहमानानां मानवानां वेदार्थसारावबोधकर्तृमुपकल्पयितुं हि पंचरात्रस्य प्रवृत्तिः । अतएव किल भगवान् विधातारं प्रति –

> वेदार्थसारसर्वस्वं मम प्रीतिकरं शुभम् ।
> पंचरात्राख्यमतुलं वदामि शृणुष्व मे ॥

[१. ७७] इति ।

अतो वेदार्थप्रबोधके पंचरात्रे वैदिका अंशा अन्तर्भवन्ते । अन्यथा पाञ्चरात्रस्य

प्रामाण्यं कथं वा सिध्येत् ?

पंचरात्रे वैदिकानां तान्त्रिकाणां च मन्त्राणां समावेशः दृश्यते । अष्टाक्षर-द्वादशाक्षरप्रमुखाः तान्त्रिका मन्त्राः यथा, पुरुषसूक्त-श्रीसूक्त-प्रमुखाश्च वेदमन्त्रा अप्यत्र च पंचरात्रे विनियुज्यन्ते । तथा च पंचरात्रे वैदिकतान्त्रिकयोः कार्ययोः समानं प्राबल्यमिति वक्तुं शक्यते ।

पंचरात्रे विनियुज्यमाना वैदिकमन्त्राः प्रायेण ब्राह्मणैर्नित्यकर्मानुष्ठानादौ विनियुज्यमाना एव । ते च मन्त्राः भगवदाराधनांगैः कार्यविशेषैः सुतरां संयोज्यन्ते । स्वामीकृष्णमाचार्येण पंचरात्रतन्त्रान्तर्गतां <u>विष्वक्सेनसंहिता</u>माधृत्य पंचरात्रे वैदिकमन्त्राणां[1] विनियोगं, तद्द्वारा पंचरात्रे वैदिकप्रभावं चाधिकृत्य ईषत् प्रस्तूयते ।

<u>विष्वक्सेनसंहितायां</u> मन्त्रोद्धारप्रकरणे अग्निप्राकारप्रभृतिभिः संज्ञाविशेषैरंकिता अष्टाविंशतिस्तान्त्रिका मन्त्रा उपदिश्यन्ते, येषां च भूतशुद्ध्यादिकार्यविशेषेषु निर्दिश्यते विनियोगः । स्थापनोपचारादिषु निर्दिश्यमानविनियोगा वैदिका मन्त्राः पश्चादुपदिश्यन्ते एकचत्वारिंशत् । एषु द्वात्रिंशन्मन्त्राः ऋग्वेदगता यजुर्वेदगता वा पंचरात्रं प्राप्ता इत्यूह्यते । पांचरात्रिका हि प्रायेण यजुर्वेदानुयायिनः । शिष्टानामष्टौ यजुर्वेदस्य [तैत्तिरीयसंहितायां द्वौ, वाजसनेयिसंहितायां चत्वारः, तैत्तिरीयारण्यके द्वौ] एकः अथर्ववेदस्य -इत्येवं संहितायामस्यां यथास्थानं वैदिका मन्त्रा क्रिया विशेषविनियोगाय उपदिश्यन्ते । अस्माभिः <u>विष्वक्सेनसंहिता</u>गतानां तान्त्रिकाणां वैदिकानां च मन्त्राणां सूचीपत्रं

---

1 On this question cf. ~~Mme.~~ Helene BRUNNER-LACHAUX, <u>Introduction</u> [p V f] to <u>सोमशम्भुपद्धति</u> [Pondichery, 1963]. Also cf. S.K.DE, "Pāñcarātra and the Upanishads", <u>Ind. Hist. Quart.</u> IX, p. 648, and, K.C. VARADACHARI, loc. cit.

पुष्टिरस्य द्वितीयभागस्यान्ते संयोजितम् । तस्य परिशीलनेन पंचरात्रे वैदिक तान्त्रिक-स्मृत्योः प्रामाण्यनिर्धारणे बाधका: सन्तुरिति दृढो मे विश्वासः ।

पंचरात्रे भगवदाराधने विनियुज्यमाना वैदिका मन्त्राः आराधनाङ्ग-कार्याणां गौरवमुत्पादयन्तः पंचरात्रस्यापि गरिमाणमभिवर्धयन्ति । दिङ्मात्र-मत्रोदाह्रियते ।

नित्याराधने उपचारार्पणे पादुकासमर्पणे [१०. १३६], उत्सवाङ्ग-ध्वजारोपणे [१८. ३१], स्नपने [१९. ६३], पवित्रारोपणे च [२४.७२, ८५] विनियुज्यमानां ऋचमेतामवलोकयामः ।

इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् ।
समूळ्हमस्य पांसुरे ॥

[ऋ. १. २२. १७]

इत्ययं ऋङ्मन्त्रः पंचरात्रे प्रयुक्तचरः । अस्यार्थः बहुभिर्बहुधा प्रतिपादितः । तथा हि -

भाष्यकारेण स्कन्दस्वामिमहोदयेन विष्णुदेवताकोऽयं मन्त्रः वासु-देवपरः आदित्यपरश्च सन् व्याख्यायते । तस्यार्थ सारः-

विष्णुर्वासुदेवः त्रिविक्रमावतारे पांसुमति देशे इव त्रिषु पृथिवी-अन्तरिक्ष-द्युलोकेषु, समारोहण-विष्णुपद-गयशिरःसंज्ञकेषु वा स्थानेषु आत्मीयं पदं निदधे । अनेन प्रकारेण भगवान् इदं सर्वं विक्रान्तवान् इति वासु-देवपरोऽर्थः ।

आदित्यपरत्वे, विष्णुरादित्यः पांसुप्रदेशे उदयगिरि -

नभोभाग – अस्तभिर्धिरोधकेषु स्थानेषु त्रेधा पदं सम्यक् प्रतिष्ठापितवान् । यथा, अग्न्यात्मना पृथिव्यां, वैद्युतात्मना अन्तरिक्षे, आदित्यात्मना दिवि – इत्येवं त्रेधा पदं निदधे । तत्र अन्तरिक्षगतं वैद्युतात्मकं पदं धर्म्यं सत् न दृश्यते । एवं विष्णुरादित्यः इदं सर्वम् अन्तरतः विचक्रमे इति ।

तथा व्याख्याकारो वेङ्कटमाधवस्तु अत्रमेनं प्रकारान्तरेण व्याचष्टे । तत्रायम् –

विष्णुः त्रेधा पदं निधाय त्रैलोक्यमिदं विचक्रमे । पांसुरे तस्य पदे त्रैलोक्यं संगतमिति ।

भाष्यकारः सायणाचार्यः पुनः प्रकारान्तरेण मन्त्रमेनं विवृणोति । तस्य स्वयं भावः –

विष्णुः त्रिविक्रमावतारधारी स्वकीयं पादं त्रिभिः प्रकारैः प्रतिष्ठापितवान् । प्रतीयमानं सर्वं जगदुद्दिश्य विशेषेण क्रमणं कृतवान् । विष्णोः धूलियुक्ते पादस्थाने इदं सर्वं जगत् सम्यगन्तर्भूतमिति ।

वृत्तिकारो मुद्गलभट्टाचार्यस्तु, मन्त्रमिमं प्रकारभेदेन व्याकरोति । तस्य भावस्तु –

विष्णुः परमेश्वरः त्रेधा स्वकीयं पादं प्रतिष्ठाप्य विशेषेण क्रमं कृतवान् । अस्य विष्णोः पादस्थाने इदं सर्वं जगत् सम्यगन्तर्भूतमिति ।

मन्त्रोऽयं पादुकार्पणे, वाहनारोपणे, स्नपने, पवित्रारोपणे च भगवतो महिमानमवगमयन् पादुकार्पणादिकार्येषु प्रकाशमानोऽस्ति । तथा च वेदाद्भुतोऽयं मन्त्रः पंचरात्रागमकार्यविशेषेषु नितरां युज्यते । मन्त्रान्तराणि

वैष्णवेषु सत्कार्येषु नितरां योग्यमर्हन्ति । अत्र स्नपने विनियुज्यमानं मन्त्रमेकं [१७.६१,१२१;२०.२१] परिशीलयामः ।

मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः ।
माध्वीर्नः सन्त्वोषधीः ॥

[ऋ. १. ९०.६]

इत्ययेण मन्त्रः मधुना भगवत्स्नापने विनियुज्यते । अत्र हि यजमानस्य कर्मसाफल्यम् आशासानेन साधकेन आत्मनश्च ईप्सितमाशास्यते । अस्यार्थो भाष्यकाराभ्यां द्विधा प्रतिपाद्यते । तत्र स्कन्दस्वामिमाधवकृतस्य भाष्यस्य सारः "वाताः यज्ञं कामयमानस्य मम प्रयोजनाय मधुरसं वृष्टिलक्षणमुदकं वर्षन्तु । नद्यश्च मधुरसमुदकं क्षरन्तु । अस्माकमोषधयो मधुमत्यः सन्तु" इति । सायणाचार्यरचितस्य भाष्यस्य सारस्तु " यज्ञकामाय यजमानाय वायवो माधुर्योपेतं कर्मफलं प्रयच्छन्ति, नद्यः समुद्रा वा माधुर्योपेतं स्वकीयं रसं क्षरन्ति । एवमस्माकम् ओषधयः माधुर्योपेताः सन्तु: सन्तु " इति । वेङ्कटमाधवकृतायां व्याख्यायां तु " सत्यकामाय वाताः मधु क्षरन्ति , सत्यविदेऽस्मै सरितः मधु क्षरन्ति । अस्माकं कृते ओषधयो मधुमत्यो भवन्तु" इत्यभिधीयते । मुद्गलकृता टीका सायणभाष्यानुसारिणी दृश्यते । एवं च मन्त्रोऽयं लोककल्याणार्थी सन् स्नपनकर्मणि सुतरां युज्यते ।

इत्थं वेदार्थानामवलम्बने पाञ्चरात्रे पदार्थभावनाभिकार्थविनियोगितया उपदिश्यमाना वैदिका मन्त्राः सत्कार्येषु संगच्छन्ते । तथा ते पाञ्चरात्रशास्त्रस्य गौरवं प्रामाण्यं च दृढीकुर्वन्ति । एवं वेदैः सह पाञ्चरात्रस्य भेदाभावात् संबन्धो

दृश्यते ।

पांचरात्रग्रन्थानां तन्त्रसंज्ञां गणयद्भिः पांचरात्रिकैः

सर्वेऽर्था येन तन्यन्ते त्रायन्ते च भयाज्जनाः ।
इति तन्त्रस्य तन्त्रत्वं तन्त्रज्ञाः परिचक्षते ॥
[कि. २. १०,१] इति
ततो [2] विपुलमर्थानं मन्त्रप्रतिष्ठाभियोजनम् ॥
+ + + +
त्राणं च कुरुते यस्मात् तस्मात् तन्त्रमितीरितम् ॥
[पि. सं. अ. १. ८३,४]

इति च निर्दिश्यमाना तन्त्रपदनिरुक्तिः पांचरात्रस्य जनसामान्यतारकत्वमवगमयति न पुनरवैदिकत्वमिति सर्वथा पांचरात्रस्य वेदमार्गानुसारित्वं सुप्रतिष्ठितम् । स्त्रीणां शूद्राणां चाध्ययनाधिकारानुकूलयति पांचरात्रेऽस्मिन् अग्निकार्यादिकार्यविशेषेषु द्वादशाक्षरादीनां मन्त्राणां विनियोगः लक्ष्यमाणः पुनरस्य तान्त्रत्वं तान्त्रिकेष्वपि आदरं इत्यत्र विनिमयको भवति । तान्त्रिका मुद्रादर्शनादयः कार्यविशेषास्तत्र तत्रोपकारकाः लक्ष्यन्ते । पंचगव्ययोजनक्रमनिर्देशावसरे [११.१०२] गव्यानामाज्यादीनां ग्रहणे वैदिका मन्त्राः प्रयोक्तव्या इति, गव्यानां योजने पंचोपनिषन्मन्त्रोऽपि प्रयुज्यत इति निर्दिशति पांचरात्रे न केवलं वैदिकानामेव, परं तु तान्त्रिकाणामपि दृश्यते समानोऽवकाशः । सदेवं पांचरात्रं वैदिकतान्त्रिकक्रियासमवायेन प्रवृत्तमनुदृश्यते । तथा च वेदपांचरात्रयोरेकविषयार्थः संबन्ध इत्यवगन्तिव्येन ॥

---

२ तनोति विपुलं ज्ञानम् [ ? ]

# पंचमोऽध्यायः

## ५. . . . . भाषावैलक्षण्यम्

### ५.१.० पांचरात्रिकभाषावैशिष्ट्यम्

पांचरात्रसंहितासु माध्यम [Medium] त्वेन स्वीकृता संस्कृतभाषा अन्वर्थाभिधानेति वक्तुं न शक्यते। पांचरात्रिकाणां संस्कृतभाषा अव्युत्पन्नानामर्चकादीनां हस्तक्षेपेण कलुषिता संलक्ष्यते। क्वचित् देवशब्दानामन्यार्थभावः, क्वचिद् विवक्षितार्थप्रतिपादने असमर्थानां पदानां संयोजनम् -इत्येवंविधं वैलक्षण्यं पांचरात्रिकसंस्कृते दृष्टिपथमायाति। प्रतिपादनमात्रपर्यवसायिभिः भाषाशुद्धौ यत्न एव न कृतः। तथा च कतिपये भाषादोषाः अनिवार्यतया यथाकथं पंचरात्रसंहितासु समभावकाशं लभन्ते। तेऽत्र विष्वक्सेनसंहिताधारेण प्रस्तूयन्ते। तथा हि -

अष्टोत्तरशतसंहितानामन्यतमायाम् अस्यां विष्वक्सेनसंहितायां संहितान्तरापेक्षया शुद्धा भाषा दृश्यते। क्वचित् कतिपये दोषाः संलक्ष्यन्त एव। संहितायामस्यां क्वचित् पदानां वैरूप्यं, क्वचिदसमर्थानां पदानां प्रयोगः, क्वचित् पदानां पौनरुक्त्यम्, क्वचित् पदानां विपर्यस्तोऽन्वयः, क्वचित् पदानां लिंगविभक्तिविपरिणामः, क्वचित् सन्धिदोषः, क्वचित् कृदन्तनियमातिक्रमः, क्वचिदकाण्डे तद्धितान्तपदप्रयोगः, क्वचित् समासनियमोल्लंघनम्, क्वचिदविहितलिङ्गप्रयोगः, ~~[illegible]~~, क्वचिद् धातूनां पदविपर्यासः, क्वचिद्धातूनामिड्विपर्ययः, क्वचित् णिजन्तस्थाने केवलस्य धातोः प्रयोगः, क्वचिल्लकारार्थविस्मरणम्, क्वचित् कारकनियमानां शिथिलीकरणं, क्वचिद् धात्वर्थविपर्यासः, क्वचिच्च छन्दोनियमातिक्रमः -इत्येते दोषाः दृष्टिपथमायान्ति।

तानधिकृत्यात्रैकादिविचार्यते । यथा हि-

४.१.१ पदानां वैरूप्यम्

संहितायामस्यां क्वचित् पदानां वैरूप्यमुपलभ्यते । संख्यावाचकानि पदानि भिन्नरूपाणि दृश्यन्ते, सर्वादिगणे पठितानां सर्वनामकार्याणि क्वचिन्न क्रियन्ते, क्वचित् सर्वादौ अपठितानां सर्वनामकार्याण्युपलभ्यन्ते तुमन्तनिष्पत्तिः अपि क्वचिदपाणिनीया दृश्यते । यथा -

१ पंचविंशतिर्वैः [२७. ३८]

२ विश्वाय विश्वरूपाय [२२. १२]

३ द्वादशानि पुरुर्द्विः [१८. १२१]

४ विहीने कुसुमे चैव [२७.४३] इत्यत्र ।

अत्र यथाक्रमं पंचविंशत्सादृश्येन पंचविंशदिति, रामशब्दसादृश्येन विश्वाय इति, फलशब्दसादृश्येन द्वादशानीति च प्रयोगः संलक्ष्यते । "पंचविंशत्" इत्यस्य स्थाने पंचविंशतिपदप्रयोगः समीचीनः । सर्वनामवाचकाद् विश्वशब्दात् चतुर्थ्येकवचने,

सर्वनाम्नः स्मै [अ. सू. ७. १. १४]

इत्यनेन ङे प्रत्ययस्य स्मै-आदेशे, विश्वस्मै इति रूपं निष्पद्यते । द्वादशन्-शब्दस्य

ष्णान्ता षट् [अ. सू. १. १. २४]

इत्यनेन षट्संज्ञायां,

षड्भ्यो लुक् [अ. सू. ७. १. २२]

इत्यनेन जश्शसोर्लोपे, द्वादश इति रूपं निष्पद्यते । इन्द्रात् कुसुमशब्दात्

विघ्नानि हन्ति सर्वाणि [१७. ४६]

त्रिणाद्यनुवर्णानि [१८. १०१]

वायौ धान्यादयं भवेत् । } [२१. १६] इत्यत्र ।
वधिरं वैष्णवादयम् । }

एतदुदाहरणेषु क्रमेण आनन्द-विघ्न-वर्ण-आलयपदानि पुंलिङ्गान्यपि नपुंसकलिङ्गानि संदृश्यन्ते ।

क्वचित्पुनर्नपुंसकलिङ्गानि पदानि पुंलिङ्गानि दृश्यन्ते । यथा -

प्रतिमापाद्यार्घ्यकान् साधनान् [१४. ७०] इति ।

अत्र नपुंसकलिङ्गं साधनपदं पुंलिङ्गे प्रयुक्तम् ।

लिङ्गविपर्यासवत् संहितायामस्यां क्वचिद् विभक्तिविपर्यासश्च दृश्यते ।

यथा -

याम्यां दिशि ततः पदम् [१७. १३६]

तुरीरष्टोत्तरस्वरम् [२४. १४] इति ।

अत्र विशेष्यविशेषणयोर्विभक्तिव्यत्ययः । प्रथमवाक्ये विशेष्यं सप्तम्यन्तं 'दिशि' पदम्, तद्विशेषणं तु द्वितीयान्तम् । द्वितीयवाक्ये विशेष्यं तुरीदिशि तृतीयान्तम्, तद्विशेषणं तु अष्टोत्तरस्वरमिति प्रथमान्तं द्वितीयान्तं वा पदम् । तथा च विशेष्यविशेषणयोर्भिन्नविभक्तिकत्वादत्र विभक्तिविपर्ययो भवति ।

४. १. ६ <u>सन्धिदोषः</u>

संहितायामस्यां क्वचित्सन्धिनियमा उल्लङ्घ्यन्ते । यथा -

वागेश्वर्येऽय यजितव [६. ७]

गवाक्षान्तोपरि संस्थाप्य [७, ४४]

दधिक्राविष्णोतिमन्त्रेण [११, ५८] इति

अत्र प्रथमोदाहरणे परत्वस्य न प्रसक्तिः। गावौ इति पूर्वपदस्य

ईदूदेद्द्विवचनं प्रगृह्यम् [अ. सू. १. १. ११]

इत्यनेन प्रगृह्यसंज्ञायां,

प्लुतप्रगृह्या अचि नित्यम् [अ. सू. ६. १. १२५]

इत्यनेन प्रकृतिभाव एवोचितो न पुनः

एङि पररूपम् [अ. सू. ६. १. ९४]

इत्यनेन विधीयमानं पररूपम्।

द्वितीयोदाहरणे, गुणसन्धिप्रसक्तिरेव नास्ति। अकारान्तस्य गवाक्ष-शब्दस्य उपरत्वे, उपरिशब्देन योगे तु गवाक्षोपरीति सिध्यति। गवाक्षान्तोपरीति तु अपशब्दायुक्तं भाति।

तृतीयोदाहरणे, गुणादेशे निमित्ताभावात्,

एचोऽयवायावः [अ. सू. ६. १. ७८]

इत्यनेन पूर्वपदान्तस्य आदेशे दधिक्राविष्णाविति सिध्येत। तथा हीदृशेषु वाक्येषु सन्धिदोषः संभवति।

४. १. ७ <u>कृदन्तनियमातिक्रमः</u>

पाणिनीयाः कृदन्तनियमाः संहितायामस्यां न सुष्ठु परिपाल्यन्ते। आत्मनेपदिनः शतृप्रत्ययविधिः सोपसर्गधातोः क्त्वाप्रत्यये ल्यबभावः, कृदन्तत्वविपर्यासश्च दरीदृश्यते। यथा -

भुंजन् स्वप्नपरायणः [१, ८२]

मूर्धिदानयित्वा च [२६, ३९ ]

आकूलय्याः प्रयत्नतः [१७, १७३]

विताने पिनध्य च [२६, ८ ] इति

अत्र प्रथमोदाहरणे, अवनार्थकस्य भुजधातोः [अभ्यवहारार्थकस्य] आत्मनेपदित्वात् शतृप्रत्ययस्य नात्र प्रसक्तिः । तथा च भुञ्जन्निति रूपमपाणिनीयं संपद्यते ।

द्वितीयोदाहरणे, आङ्पूर्वकात् णिजन्तात् प्रापणार्थकणीञ्धातोः क्त्वाप्रत्यये,

समासेऽनञ्पूर्वे क्त्वो ल्यप् [अ. सू. ७. १. ३७]

इत्यनेन ल्यपि च, निष्पद्यमानस्य 'आनाय्य' इत्यस्य स्थाने आनयित्वेति - प्रयोगः । अत्र च पाणिनीयकृदन्तनियमः अतिक्रान्तः ।

तृतीयोदाहरणे, आङ्पूर्वकात् स्पर्धाशब्दार्थकात् ह्वेञ्धातोः ल्यप्प्रत्यये,

आदेच उपदेशेऽशिति [अ. सू. ६. १. ४५] इत्यात्वे, निष्पद्यमानस्य 'आहूय' इत्यस्य स्थाने आकूलय्य इति प्रयोगोऽपि कृदन्तनियमोल्लंघनं प्रदर्शयति ।

चतुर्थोदाहरणे, लुप्ताकारकाप्युपसर्गपूर्वकाद् बन्धनार्थकात् नहधातोः क्त्वाप्रत्यये ल्यपि,

नहो धः [अ. सू. ८. २. ३४]

इत्यस्य प्रवृत्तौ निमित्ताभावात् धत्वाभावे निष्पद्यमानस्य 'पिनह्य' इत्यस्य स्थाने पिनध्येति कृदन्तपदप्रयोगोऽपि पाणिनीयनियमातिक्रममुपदर्शयति । तथा च पाणिनीयकृदन्तनियमाः नात्र सुष्ठु परिपालिता इति वक्तुं शक्यते ।

२ भाम मह्यं ददत्वेति [४.११]

३ न ते विष्णो इति ददेषु [१०.१३३]

दिवानक्तं वर्चिं ददेषु [१७.२३८]

४ किंचित् संहितस्य वाक्यताम् [२१.१ ] इति

एतां प्रथमतो निर्दिष्टेषु पंचसु वाक्येषु दानादनार्थकाद् जुहोत्यादौ पठ्यमा-
नाद् धातो: [विधि] लिङि प्रथमपुरुषैकवचने, यासुट्प्रत्यये ,

श्लौ [अ. सू. ६.१.१०]

इत्यनेन द्वित्वे अभ्यासकार्ये ,

यासुट् परस्मैपदेषूदात्तो ङिच्च ।
[अ. सू. ३. ४. १०३]

इत्यनेन यासुडागमे, अनुबन्धलोपे ,

लिङ: सलोपोऽनन्त्यस्य ।
[अ. सू. ७.२.७९ ]

इत्यनेन सकारलोपे ,

इतश्च [अ. सू. ३.४. १०० ]

इति सूत्र: इकारलोपे च निष्पन्नमस्य जुहुयादित्यस्य स्थाने ददेदिति विलक्षणं लिङन्तं पदमुपलभ्यते ।

दधत्वेति क्रियापदं तु विलक्षणं भासते । यतो हि डु, दाञ् दाने -इत्यस्माद्धातो: लोटि मध्यमपुरुषैकवचने 'देहि' इति, 'दत्स्व' इति वा रूपं निष्पद्यते । यथा हि -

क्वचिदात्मनेपदीकृतः, आत्मनेपदी च परस्मैपदीकृतः । यथा -

१ कथयामि शृणुष्व मे [१, ७७]

प्रवक्ष्यामि शृणुष्व तम् [१२, १]

शृणुष्वातः परं द्विज [१४, १०४]

लक्षणं शृणुष्व मे [११, ८४]

शृणुष्व द्विजसत्तम [११, १३१]

शृणुष्वैकोनपंचाशत् [११, १५८]

तच्छृणुष्वावधानेन [२४, ३०] इति

अत्र श्रवणार्थकस्य श्रुधातोः परस्मैपदित्वेन ल्यादौ पठ्यमानस्य लोटि मध्यमपुरुषैक-वचने, सेर्हौ,

श्रुवः शृ च । [अ. सू. ३. १. ७४]

इत्यनेन शृआदेशे, श्नुप्रत्यये,

उतश्च प्रत्ययादसंयोगपूर्वात् [अ. सू. ६. ४. १०६] इत्यनेन हिलोपे च निष्पद्यमानस्य 'शृणु' इत्यस्य स्थाने शृणुष्वेति आत्मनेपदिन इव रूपं प्रयुक्तम् ।

२ आत्मनेपदिनः परस्मैपदाकरणं पुनर्यथा -

आरभेद् भिषिभागेऽपि [२१, ९२] इति ।

अत्र आङ्पूर्वः राभस्यार्थको रभधातुः ल्यादौ आत्मनेपदित्वेन पठ्य-मानोऽपि परस्मैपदीकृतः । तेन परस्मैपदीकृतस्यास्य रभधातोः [विधि] लिङि प्रथमपुरुषैकवचने

लिङः सीयुट् । [अ. सू. ३. ४. १०२]

इति सीयुटि, अनुबन्धलोपे, सलोपे, गुणे, लिङ इकार लोपे च निष्पन्नमाभम् आरभेदिति रूपं प्रयुक्तम् । यथा च धातूनां पदविपर्ययप्रयुक्तं वैलक्षण्यमेतदीयेतर-

स्नात्वा यावज्जाप्नता [११. ४७] इति ।

उदाहरणेऽस्मिन् आयन्नाप्नता स्नानकर्ता भवान्, अपितु भवान् स्नापयति इति विवक्षा । तस्मात् `स्नापयित्वा` इति णिजन्तस्य स्नाधातोः क्त्वाप्रत्ययान्तं रूपम् अपेक्ष्यते । किं त्वत्र केवलस्य स्नाधातोः क्त्वान्तं रूपमुप-यतं दृश्यते ।

४. १.१८ लकारार्थविभ्रमणम्

संहिताधामन्यां क्वचित्लकारार्थो विप्लुत इव भाति । यथा -

पैतृकान् सकलान् भोगान्
भुक्त्वान्ते वैष्णवं पदम् ।
गच्छेदसः प्रयत्नाभि
रक्ष तेऽभिमुक्तये ॥ [४. २४] इति ।

अत्र गमनक्रियायां कर्ता जम्भराजः । जम्भराजस्य वैष्णवपद-गमनं चाभावत्कालिकविवक्षम् । यथा वात्र

अनद्यतने लङ् । [अ. सू. ३.२. १११]

इति सूत्रेण विधीयमानो लङ् अपेक्ष्यते, न पुनः

विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ् ।

[अ. सू. ३. ३. १६१]

इत्यनेन विधीयमानो लिङ्, अत्रत्य गच्छेदिति क्रियापदस्य स्थाने अगच्छदिति क्रियापदमुपयुक्त इति यावत् ।

४. १. १९ कारकनियमानां शिथिलीकरणम्

संहिताधामन्यां कारकनियमाः क्वचित्

अंशतो वैयाकरणानां मतं पोषयति । यथा हि

वैयाकरणैः

वैकल्पिकं वेदमष्टन आत्वम् ।

अष्टनो दीर्घादिति सूत्रे दीर्घग्रहणात् -

ज्ञापकात्

[ सि. कौ. पृ. ३२ ]

इति पठ्यते । एतदनुसारेणैव शास्त्रविरहितानि अष्टशब्दरूपाणि अनुपदं संहितायामस्यामुपलभ्यन्ते । यथा -

कलशानष्ट विन्यसेत् [१४. २१]

मंगलान्यष्ट जातीभिः [१८. ७०]

अष्टाभिरष्टभिः पृथक् [११. ६७]

कलशानष्ट पवित्रौ [२२. ७]

मंगलान्यष्ट पवित्रः [२४. १२७]

मंगलानि तथाष्ट च [२५. १५६]

पात्रेष्वष्टसु धान्यानि [२६. ३७] इति

एष प्रथमोंऽशः ।

द्वितीयस्तु, धातूनामनेकार्थत्वविषयकं वैयाकरणमतम् । धातूनां विविधार्थकत्वं वैयाकरणा अभ्युपगच्छन्ति । पठन्ति च वैयाकरणाः:

धात्वर्थनिर्देशोपलक्षणम् । यागात्

स्वर्गो भवतीत्यादावुत्पादन इत्याद्यर्थात् ।

[ सि. कौ. पृ. १७५ ] इति

वैयाकरणानां मतमेव <u>विहगेन्द्रसंहिता</u> परिपोष्यते । अत्र पंचरात्रशब्दार्थनिर्धारयते हि

रा इत्ययमपि प्रोक्तो धातुर्दानार्थकः । [२. ३.]

# षष्ठोऽध्यायः

## ६. . . . . . . छन्दःशुद्धिविवेकः

### ६.१ छन्दोविवेकः

पंचरात्रम् अनुष्टुप् छन्दोबद्धमिति प्रचलति सामान्या प्रतीतिः [पा.[कि.] १०. ३३५] अनुष्टुभि पादचतुष्के प्रत्येकमष्टौ वर्णा भवन्ति । तथा च ग्रन्थावयवत्वादि श्लोके आहत्य द्वात्रिंशद्वर्णाः संभवन्ति ।

पंचमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः ।
गुरु षष्ठं च सर्वेषामेतच्छ्लोकस्य लक्षणम्

इति सामान्यं श्लोकलक्षणं प्रायः सर्वेषु पंचरात्रसंहिताश्लोकेषु संगच्छते ।। क्वचित् पुनः वर्णानां न्यूनाधिक्यं, गुरुलघूनां स्थानव्यत्ययः - इत्येवं छन्दोदोषाः संदृश्यन्त एव ।

इयमपि विश्वामित्रसंहिता पंचरात्रसंप्रदायानुरोधेन ~~अनुष्टुप्छन्दसा~~ अनुष्टुप्छन्दसा ग्रथिता । अस्याः श्लोकाः प्रायो लक्षणानुसारिणः । क्वचित्पुनः छन्दोदोषा दृश्यन्त एव । तथा हि - वर्णानां न्यूनता यथा -

प्रधानदिव्यसंस्थेषु [१८. ६८] इति ।

अत्र एकेन वर्णेन न्यूनता दृश्यते ।

वर्णानाम् आधिक्यं यथा -

गच्छन्त्यन्तोपरिसंस्थाप्य [७. ४१]
अर्धुर्ध्वं दक्षिणाकर - [१३.२३]
स्पृशेत द्विजवरोत्तम । [१४. १८३]
बीजपूरं पुष्कजपूरं च [१५. २११]

दधिका विष्णो त्रिमन्द्रेण [१९, ४८]

अलकतोयैरपि क्रमात् [१९,१८८]

पंचमर्वेदधिका विष्णा [२०, ३८] इति

एषूदाहरणेषु पञ्चेन वर्णेन आधिक्यमुपलभ्यते । गुरुलघूनां स्थानविपर्यासो यथा-

स्तुः प्रभृति दिवसान् [१६, १०३]

आगच्छत पितृगणा [१७, १३७]

आगच्छत पितृगणा [१७, १४३]

विना कुन्तुनदध्याणि [१९, ८७ ]

हेम्न रसतालं च [१९, १७ ]

त्रिसन्ध्यधिकं प्रभुः [१९, १३१]

कुसुमान्यप्रवृद्धतोद [१९, १४४] इति

एषूदाहरणेषु अधोरेखांकितेषु स्थानेषु गुरुलघुविपर्यासः संलक्ष्यते ।

एते च छन्दोदोषाः प्रायः पाठप्रमादजन्या इति विभावनाः स्युरि-
त्युचितं प्रतीयते । तथा च संहितान्तरवद् विष्णुमित्रसंहिता छन्दोनियमानुसरणे क्वचिद् स्खलत्येव ।

-0-0 0-0-0-0-0-

।

॥

।

॥

।

# सप्तमोऽध्यायः

## ७ . . . . . . . . उपसंहरणम्

### ७.१. उपसंहारः

एवमित्थं पाञ्चरात्रान्तर्गतविश्वामित्रसंहिताया नवीन संस्करणस्य तुलनात्मकसमीक्षणेऽस्मिन् प्रथमभागे दक्षिणापथे प्रवृत्तप्रचारस्य पाञ्चरात्रागमस्य विभिन्नसंहिताग्रन्थानुरोधि लक्षणं, संहिताग्रन्थविस्तरः, संहितानां वर्गीकरणक्रमः संहितापौर्वापर्यविवेचनं, प्रतिपाद्यपरिचयः - इत्येते विषयाः विवेचिताः ।

द्वितीयभागे, पदार्थपक्षं सुस्पष्टमुपवर्णयन्त्याः विश्वामित्रसंहिताया नवीनसंस्करणस्य आवश्यकता, नवीनसंस्करणे आधारभूतानां विभिन्नानां मातृकाणां परिचयः, नवीनसंस्करणसम्पादने अस्मदनुसृतः क्रमः, प्रस्तुतसंहिताया वाक्यव्यवस्थाप्रदर्शनम् -इत्येते विचाराः प्रस्तुताः ।

तुलनात्मकसमीक्षणपरे तृतीयभागे पुनः विश्वामित्रसंहितायाः पाञ्चरात्रसंहितान्तरैः संवादविवादौ सनिदर्शनं संकीर्तितौ । उपक्रमप्रक्रियानुसारेण पाञ्चरात्रानुसारिणि पदार्थपक्षे अंगभूतानां मुद्रादर्शन - मण्डलयाग -स्नपनानां देवालयपुरःसरमुपवर्णनं विस्तरेण, चक्र-अग्नकुण्डप्रभृतिका स्थिकविकाराणां मन्त्रोद्धारादिप्रायश्चित्तान्तानां पदार्थपक्षाङ्गकार्यविस्तराणां कीर्तनं संग्रहेण - इत्येवं तुलनात्मकसमीक्षणमुपक्षिप्तम् । तुलनात्मकसमीक्षणानुसारं विश्वामित्रसंहिताधारेण पाञ्चरात्रसंहितानां भाषायाः वैलक्षण्यं छन्दोविवेचनं च सनिदर्शनं सम्प्रदर्शितम् ।

औवोऽपि भूधराख्यश्च औः स्मृतो ह्यौष्ण्यधारकः ।
तेजोवैश्वर्यदो व्यापी व्योमेशोऽङ्कार एव च ॥
विसर्गः सृष्टिकृत् ख्यातो ह्यःकारः परमेश्वरः ।
कमलश्च करालश्च ककारः प्रकृतिः परा ॥
खकारः सर्वदेवश्च वेदात्मा विश्वभावनः ।
गदध्वंसी गकारश्च गोविन्दः स गदाधरः ॥
घकारश्चैव घर्मांशुस्तेजस्वी दीप्तिमान् स्मृतः ।
ङकार एकदंष्ट्रश्च भूतात्मा विश्वधारकः ॥
चकारश्चंचलगती चन्द्रांशुः स च कथ्यते ।
छकारश्छलविध्वंसी छन्दश्छन्दःपतिः स्मृतः ॥
अजितो जन्महन्ता च जकारः स च शाश्वतः ।
झञ्झो झकारः कथितः ज्ञानात्मा ज्ञानसाधकः ।
उन्मत्तरूपी मदनाख्यश्च ञकारः सत्त्वधारकः ।
टाङ्की टकार आह्लादो विश्वाप्यायकरः स्मृतः ।
~~ठनरः कौस्तुभः आह्लादने निरन्तरम्~~
ठकारः कौस्तुभः प्रोक्तो नेमिर्गिरिधरस्तथा ॥
डकारो दण्डधारश्च मौसलोऽखण्डविक्रमः ।
ढकारो विश्वरूपश्च कृष्णकर्मा प्रतर्दनः ।

---

१ ञकार [?]

सूर्यो हकारः प्राणस्तु परमात्मा प्रकीर्तितः ।

अनन्तेशः क्षकारस्तु वर्णान्तो गरुडः स्मृतः ॥

अवेगर्धा वर्णानामित्येताः परिकीर्तिताः ॥

---

२· <u>पाद्म [ उ ] २३, १ –३८</u>

अक्षरेष्वक्षराणां नामभेदः प्रदर्श्यते ।

उद्गीथश्छन्दसामादिः प्रणवस्तारकस्तथा ॥

ब्रह्म[1] च ब्रह्मबीजश्च व्यापी ओंकार इत्यपि ।

नामानि प्रथितान्यष्टावकारो विष्णुरुच्यते ॥

ओंकारादिश्चाक्रोध आकारो मधुसूदनः ।

आदिदेवो गोपनश्च ह्यादिकारस्त्रिविक्रमः ॥

माया बन्धुश्च रामश्च रूपी तदनन्तरम् ।

धवबिन्दुर्महामाया वामनः कर्षति तथा ॥

उकारो भुवनाख्यानः श्रीधरश्चोदयस्तथा ।

ऊकारश्चोर्ध्वकेशो हृषीकेशो गुहाशयः ॥

ऋकार ऋतधामा च पद्मनाभस्तथोच्यते ।

ॠकारः पीतनामा स्याद्योगी दामोदरस्तथा ॥

ऌकारः केशवो गोप्ता प्रबोधारो महेश्वरः ।

ॡकारो दीर्घघोणश्च नारायणसमाह्वयः ॥

---

१ ब्रह्मा –पाठ. २ कपिला. –पाठ. ३ प्रवा. – पाठ. ४ घोष –पाठ.

चतुर्णिर्विकारस्य सूक्ष्मः स उच्यते ॥

ओंकारभुवनाधारो रोऽनन्तः कालपावकः ।

वकारो विधुधाम्नश्च धरेशः[1] पुरन्दरः ॥

वराहश्चामृताधारो ककारो वरुणः स्मृतः ।

मकारः शंकरः शान्तः पुण्डरीकः प्रकीर्तितः ॥

नृसिंहश्चाग्निरूपश्च भकारो भास्करस्तथा ।

लकारस्त्वमृतस्तुष्टिः सोमश्च परिकीर्तितः ॥

सूर्यो[2] हकारः प्राणस्तु परमात्मा प्रकीर्तितः ।

अनन्तेशः क्षकारस्तु वासन्तो गरुडः स्मृतः ॥

बिन्दुः संहारकृच्चैव विसर्गः सृष्टिरुच्यते ।

बिन्दुश्च विसर्गश्च वर्णाः स्थूलसूक्ष्मपरात्मकाः ॥

---

३· पा. सं. २४. ३-२८

अकारस्त्वप्रमेयस्य प्रथमो व्यापकः स्मृतः ।

आदिदेवस्तथाकार आनन्दो गोपनः स्मृतः ॥

रामस्य इकारस्य ऋद्ध इष्टः प्रकीर्तितः ।

ईकारः पद्मबिन्दुर्वै विष्णुर्माया पुरन्दर ॥

उकारो भुवनाख्यश्च उद्दाम उदयस्तथा ।

ऊकार ऊर्ध्वो लोकेशः प्रजाधाराख्य एव च ॥

ऋस्वश्च ऋतधामा च ऋकारः स तु धातुकः ।

---

१ धरेशः पाठा. २ हः प्राणः परमात्मा च दिव्यः सूर्य इतीरितः, हकारः परमात्मा च दिव्यः सूर्य उदीरितः - पाठा.

न गुरुं दूषयेत्तावा नाचरेत्तस्य विप्रियम् ।

गुरुवद्गुरुदारेषु वर्तितव्यमसंनिधौ ।।

आचार्यमच्युतं शास्त्रं त्रयं संमानयेत् सदा ।

नास्तिकान् भिन्नमर्यादान् देवब्राह्मणदूषकान् ।।

न स्पृशेन्नैव तैः सार्धं संवसेद् दुर्दशास्वपि ।

प्रसारयेन्नैव पादौ गुरुदेवाग्निसंनिधौ ।।

२: वि. ति. ३. २१७-२०

नग्नः परस्य नाश्नीयां नाशमालां प्रदर्शयेत् ।

मुद्रां लिपिं न कथयेद् गुरुं सम्यक्प्रकाशयेत् ।।

गुरोर्न संचरेच्छायां वचनं चास्य नाक्रमेत् ।

न दूषयेत्कन्याभ्यां तत्प्रियं सर्वदाचरेत् ।।

गुरुवद्गुरुदारेषु वर्तितव्यमसंनिधौ ।

आचार्यमच्युतं शास्त्रं त्रयं संमानयेत् सदा ।।

नैव स्पृशेन्नास्तिकादीन् न वसेत् तैः सह क्वचित् ।

गुरुदेवाग्निविप्रेषु चरणौ न प्रसारयेत् ।।

---

१. ९. ८४-६        पाद्म [ प. ] २. ८२.३

[दीक्षायां गुरुदक्षिणा] मण्डलार्धं च कुम्भार्धं देवगुरस्य देशिकः ।

वर्धयेदाक्षिणा शिष्यं शिष्यश्च गुरवे सदा ।।

गां च भूमिं हिरण्यं च भूषणं यानमेव च ।

दासीदासादि वित्तेदात्मवित्तानुसारतः ॥

---

१०· <u>१, १०,१</u> <u>पाद्म [उ.] २, ८७,८</u> ।

[दीक्षितपर्यायवाचकाः] उच्यते नामभिर्यैस्तैर्निबोध: प्रावृतो यथा ।

सूरिः सुहृद्भागवतः सात्वतः पंचकालवित् ॥

एकान्तिकस्तन्मयश्च पांचरात्रिक इत्यपि ।

एवमादिभिराख्याभिराख्येयः कमलासन ॥

---

११· <u>१, ११,२</u> <u>पाद्म [उ.] २, ८९</u> ।

[अष्टविधः] सम्योऽङ्गे सदाचारः स्वाध्यायो द्रव्यसंग्रहः ।

बुद्धियोगः स्मृतिर्ध्यानमित्येवं विधिरष्टधा ॥

---

१२· <u>१, १२-४</u> <u>पाद्म [उ.] २,१०-२</u>

[भागवतपदार्थः] विधिनानेन दीक्षितश्चेद् स भागवत उच्यते ।

\+ \+ \+ \+

\+ \+ \+ \+

ज्ञानादिगुणसंधाता भगो यत्र स उच्यते ॥

भगवद्भक्तिरस्त्येति स भागवत उच्यते ।

---

१३· <u>१०, ४,५</u> <u>पाद्म [उ.] ३, २,३</u>

[सप्तविधं स्नानम्] वारुणं दिव्यमाग्नेयं वायव्यं पार्थिवं तथा ॥

कुशार्घ्यपुष्पकरणं मन्त्रोच्चारणपूर्वकम् ॥

तदाग्नेयं भवेत् स्नानं शोधनं परमं स्मृतम् ।

---

१९· <u>१०, १२,३</u> — <u>पाद्म [उ.] ३, ११,२</u>

[मानसस्नानम्]

शिरोदम्यार्णं वासः परिधाय कुशासनः ।

प्राणानायम्य मां ध्यायेद्धृदयाम्भोरुहे स्थितम् ॥

ध्यानेनानेन निर्धूतकल्मषो जायते पुमान् ।

स्नानं मानसमेतत् स्यात् - - - - ॥

---

२०· <u>१०, १४,४</u> — <u>पाद्म [उ.] ३, १०</u>

[मान्त्रस्नानम्]

- - - - अभिमन्त्रितैर्मन्त्रैर्विप्रकरेरितैः ।

अम्भोभिः प्रोक्षणं प्रथमं तस्मान्मान्त्रं स्नानमिष्यते ॥

---

२१· <u>१०, ७७,८</u> — <u>पाद्म [उ.] ३,१०</u>

[अर्घ्यद्रव्याणि]

कुशाग्राक्षतं पुष्पं फलं मलयजं तथा ।

सितान् सिद्धार्थसहितान् यवानर्घ्यस्य भाजने ॥

---

२२· <u>१०, ८८ -९३</u> — <u>पाद्म [उ.] ३, १०४-९</u>

[योगपीठकल्पनम्]

- - - - देवस्य योगपीठं प्रकल्पयेत् ।

अभिन्ने सदृशे पीठे प्रतिमायाश्चतुर्भुज ॥

आधारं प्रथमं कूर्मं कालाग्निं तदनन्तरम् ।

परितोषकमाद्य भाविर्न गच्छात्मना ।

---

२६· <u>१२. ५८.१</u> — <u>पाद्म [च.] ४. ३७.८</u>

[शिखापीठे बलिदानम्]

शिखायां पीठिकामूर्ध्नि पूजयेद्विष्णुपार्षदान् ।

बलिं निक्षेपेण दत्वा पीठस्य मूर्धनि ।

---

२७· <u>१३. २-६</u> — <u>१· पाद्म.[च.] २२. २-४</u>

[मुद्रालक्षणादि]

अंगुलीरचनाभेदो मुद्रा तस्मात्प्रदर्शिता ।

सिद्धानामक्षराणां मुदं द्रावयति क्षणात् ॥

ततो मुद्रा निरुक्तं तेषां तस्याः प्रयोजनम् ।

प्रीणनं चापि देवानां कर्मणा सोऽपि दर्शितः ॥

प्रयोक्तव्यश्च रहसि न बहिर्दर्शयेदिति ।

मन्त्रमण्डलमुद्राणां गुप्तिरेषा सनातनी ॥

गन्धलिप्तौ करौ कृत्वा मुद्रादर्शनमाचरेत् ।

<u>२· पु. ३२. २,३</u>

मुदं समस्तसत्वानां[१] तत्क्षणाद्द्रावयिष्यति ।

तस्मादन्वर्थनामाभूदेषा गोप्या सद्बुद्धिः ॥

न बहिर्दर्शयेन्मुद्रां सिद्धां देवतादिनाम् ।

गन्धलिप्तौ करौ कृत्वा मुद्राबन्धनमाचरेत् ॥

<u>३· श्रीप्र. ४४. ६३.१</u>

मुद्रा नाम सिद्धानाममराणां च रक्षसाम् ॥

१· सत्वानां [?]

यस्मान्मुदं द्रावयति तस्मान्मुद्रेति कीर्त्तिता ।

४. चि, ७, ३४,६

मुदं कुर्वन्ति देवानां राक्षसान् द्रावयन्ति च ॥

तस्येयं सर्वमुद्राणां मुद्रात्वं तान्त्रिका विदुः ।

५. ई, २४, २, ३,४

मुदं कर्मनिरतानां ददात्यमलचारिणाम् ॥

द्रावयन्ति च दोषाणां बाह्याभ्यन्तरचारिणाम् ।

तेन मुद्रा समाख्याता कृत्स्नापि च मुद्रणात् ॥

+ + + +

+ + + +

मध्यदिग्धौ करौ कृत्वा मुद्राबन्धं समाचरेत् ।

६. पर, १३, २

हिंसकानां मुदं यस्माद्द्रावयन्तीति दर्शिताः ।

तेन मुद्राः समुक्ता ब्रह्मन् देवतानां मनोहराः ॥

७. विष्व, ११, ६,७

तथाथा तु यथा यस्मात् साधको देवयोरिणाम् ॥

द्रावयेत मुदं तस्मान्मुद्रा — — —

---

१८. १३, ६, ७

[ हृन्मुद्रा ]

१. प, ८, १२,३

दक्षिणेन तु हस्तेन मुष्टिबन्धं प्रकल्पयेत् ॥

अंगुष्ठं करमध्यस्थं कृत्वा चोपर्य हृदि स्थित ।

हृदयाख्या भवेन्मुद्रा सर्वतन्त्रेषु साधनी ॥

<u>२. पाद्म [ च. ] २२, ४,६</u>

अनामिकामध्यमयोः प्रवेश्याङ्गुष्ठमायतम् ।

विधाय मुष्टिं हृदये न्यसेद्धृदयमुद्रिका ।

<u>३. नार. ६. ६,७</u>

अनामिकामध्यमयोः प्रवेश्याङ्गुष्ठमायतम् ॥

कुर्वीत हृदये मुष्टिं हस्ताभ्यां हृदयस्य तु ।

<u>४. पु. ३३. ३०</u>

अङ्गुष्ठं मध्यतः कृत्वा मुष्टिं बध्वा हृदि न्यसेत् ॥

<u>५. श्रीप्र. ४४. ७४,६</u>

अनामिकामध्यमयोर्मध्येऽङ्गुष्ठं निवेश्य च ।

मुष्टिं कृत्वा तु हृदये न्यासो हृदयमुद्रिका ।

<u>६. वि. ७. १६,७</u>

अनामामध्ययोर्मध्ये निवेश्याङ्गुष्ठमायतम् ॥

दक्षिणस्य तु हस्तस्य मुद्रेयं हृदये स्मृता ।

<u>७. पर. १४. ६</u>

अनामिकामध्यमयोर्निविशाङ्गुष्ठमायतम्[1] ।

कुर्वीत हृदये मुष्टिं मुद्रा च हृदये स्मृता ॥

---

२१. १३. ८ <u>१. पाद्म [ च. ] २२. ६,७</u>

[ऊर्णमुद्रा ] कृत्वा मुष्टिमधो बध्वा स्थापयित्वा च मूर्धनि ।।

अंगुष्ठाग्रेण चलनं सर्वथा चोर्णमुद्रिका ।

<u>२· वि. ७. १७.८</u>

निर्वर्त्य मुष्टिमाकुञ्च्यादङ्गुष्ठाग्रेण तर्जनीम् ।।

स्थापयेत्तु ललाटान्ते मुद्रेयं शिरसि स्मृता ।

<u>३· मा. ३१. १०.१</u>

निर्वर्त्य मुष्टि[1]माकाञ्च्यादङ्गुष्ठेन च तर्जनीम् ।।

स्थापयित्वा ललाटान्ते शिरोमुद्रा प्रचक्ष्यते ।

<u>४· पद, १४. ७</u>

निबध्य मुष्टिमं[2] कुञ्च्यादङ्गुष्ठाग्रेण तर्जनीम्[3]

स्थापयित्वा ललाटान्ते शिरोमुद्रा प्रकीर्तिता ।।

---

३०· १३.१ <u>१· पादम [च] ३२. ७.८</u>

[शिखामुद्रा ] ऊर्ध्वाङ्गुष्ठं दृढं मुष्टिं बध्वा स्पृशेच्छिखापदे ।।

शिखामुद्रेयमुदिता - - - - ।

<u>२· नार. ६. ८.९</u>

एवं बध्वा दृढं मुष्टिं कृत्वा चाङ्गुष्ठमूर्ध्वगम् ।।

स्थापयित्वा शिखादेशे शिखामुद्रा प्रचक्ष्यते ।

---

१ ~~निक्ष्य. [illegible]~~/७२ माकुञ्च्या.-[?] २· तर्जनीम् [?]

[शीर्षमुद्रा ]　देवा मुष्टिमधो बध्वा स्थापयित्वा च मूर्धनि ।।

अंगुष्ठाग्रेण चान्तं तर्जन्या शीर्षमुद्रिका ।

२. ति. ७. १७.८

निर्वर्त्य मुष्टिमाकन्यादङ्गुष्ठाग्रेण तर्जनीम् ।।

स्थापयेत्तु ललाटान्ते मुद्रेयं शिरसि स्मृता ।

३. मा. ३१. १०.१

निर्वर्त्य मुष्टिमा[१]काञ्च्यादङ्गुष्ठेन च तर्जनीम् ।।

स्थापयित्वा ललाटान्ते शिरोमुद्रा प्रकल्पते ।

४. पद्. १४. ७

निबध्य मुष्टिमं[२] कन्यादङ्गुष्ठाग्रेण तर्जनीम्[३]

स्थापयित्वा ललाटान्ते शिरोमुद्रा प्रकीर्तिता ।।

---

३०. १२.१　१. पाद्म [च] ३२. ७.८

[शिखामुद्रा ]　ऊर्ध्वाङ्गुष्ठं दृढं मुष्टिं बध्वा मध्येशिखापदे ।।

शिखामुद्रेयमुदिता - - - - ।

२. नार. ६. ८.१

एवं बध्वा दृढं मुष्टिं कृत्वा चाङ्गुष्ठमूर्ध्वगम् ।।

स्थापयित्वा शिखादेशे शिखामुद्रा प्रकल्पते ।

---

१ ~~निर्वर्त्य. ३३~~/७.२ मान्या.-[?] ३. तर्जनीम् [?]

३.पु. ३३, ३८

बध्वा शिखायां संपूज्येदूर्ध्वाङ्गुष्ठेन मुष्टिना ॥

४.वीपु. ३४, ७७,८

ऊर्ध्वाङ्गुष्ठयुतां मुष्टिं शिखायां विन्यसेदपि ॥

शिखामुद्रेति सा प्रोक्ता - - - - ।

५.वि. ७, १८,१

वर्तयित्वा दृढां मुष्टिं कुर्यादङ्गुष्ठमूर्ध्वगम् ॥

स्थापयेत्तां शिखादेशे शिखामुद्रा प्रकीर्तिता ।

६.कपि. २७,६

एवं बध्वा दृढां मुष्टिं कुर्यादङ्गुष्ठमूर्ध्वगम् ।

स्थापयित्वा शिखादेशे शिखामुद्रा प्रशस्यते ॥

७.पर. १९,८

एवं बध्वा दृढां मुष्टिं कुर्यादङ्गुष्ठमूर्ध्वगम् ।

स्थापयित्वा शिखादेशे शिखामुद्रेयमिष्यते ॥

---

31 १३, १०,१ १.सनत् [ऋषि, ] २, १६७

[कच्छपमुद्रा]

तर्जन्या दक्षिणा वामां विवेष्टितलघ्वाङ्गुलिः ॥

तत्र विस्तीर्य स्यादङ्गुष्ठौ तर्जन्या मोचयेत्ततः ।

शिष्टा यत्तत्कुम्भं न्यस्य सर्वेषु तु करद्वयम् ॥

ज्ञेया कच्छपमुद्रा सा सर्वरक्षाविधायिनी ।

---

३२· <u>१३, ११,२</u>

[ अस्त्रमुद्रा ]

<u>१·प, ८, २२,३</u>

तर्जनीं स्फोटयेद्दिक्षु दक्षाङ्गुष्ठेन तु ।
धूर्तं कथयैव चतुर्भ्यां संनिरोधयेत् ॥
अस्त्रमुद्रेति विख्याता ।

<u>२· पाद्म [ च ] २२,१०,१</u>

तर्जन्यङ्गुष्ठविरति स्फोटयेत्प्रणवम् स्मरन् ।
दिक्षु सर्वासु देवाभिमुख्ये बध्वा चतुर्षु ॥
देवास्त्रमुद्रा विशेया – – – –।

<u>३·ब. सं ३४, २७,८</u>

तर्जनीं स्फोटयेद्दिक्षु दक्षाङ्गुष्ठेन तु ।
धूर्तं कथयैव चतुर्भ्यां संनिरोधयेत् ॥
अस्त्रमुद्रेति विख्याता – – – –

<u>४· पु. ३३, ४०,१</u>

– – – – तर्जन्यङ्गुष्ठयोस्तथा ॥
स्फोटनं देव सर्वत्र अस्त्रमुद्रेति कीर्तिता ।

<u>५. श्रीप्र. ११. ८०,१</u>

कनिष्ठाङ्गुली विन्यस्तौ मुष्टीकृत्य करद्वयोः॥
तर्जन्यङ्गुष्ठयोः स्फोटं दक्षिणस्याप्यदिक्षपि।
शिरः प्रदक्षिणेनैव कुर्याच्छेदमुद्रिका ॥

६·शिव, ११, ११,२

अपरा त्वाख्य मुद्रेणा कथ्यते दक्षिणाग्रकम् ।

मुष्टिं बध्वा तर्जन्यग्रमङ्गुष्ठरेखया ।।

स्पृष्ट्वा स्फोटमुदक्षेप: पूर्वादिदशदिक्ष्वपि ।

---

३३· १३, १३ [नेत्रमुद्रा]

१· पादुम [च.] ३२, ११,२

शिखामुद्रामधोमुखीम् ।।

विन्यसेत् भ्रुवोर्मध्ये नेत्रमुद्रेयमीरिता ।

२· पु. ३३-३०

शिखामुद्रामध: कृत्वा भ्रुवोर्मध्ये निवेशयेत् ।

नेत्रमुद्रेति कथिता – – – – ।।

३· श्रीप्र, ४४, ९८

+[1] सा मुद्रां यद्यधोमुखीम्[2] ।

भ्रुवोर्मध्ये स्थाप्यमाने[3] नेत्रमुद्रेति कीर्त्यते ।।

[+ शिखामुद्राम्]

४. वि. ७,२१,२

भ्रूमध्ये स्थापयेद्ध्वा शिखामुद्रामधोमुखीम् ।।

नेत्रमुद्रेयमाख्याता – – – – ।

५. मा. ३१, १२,३

स्थापयित्वा भ्रुवोर्मध्ये शिखामुद्रामधोमुखाम्[4] ।।

---

१ सा मुद्रा [?] २ मुखी [?] ३ स्थाप्यमाना [?] ४· मुखीम् [?]

नेत्रमुद्रा समुद्दिष्टा तर्जनीमध्यमांगुला ।

६·कपि, २७, ९

स्थापयित्वा भ्रुवोर्मध्ये चित्रामुद्रामथोंगुलम्[1] ।

नेत्रमुद्रा समुद्दिष्टा काश्यप द्विजपुंगव ॥

७·पद, १४, ११

स्थापयित्वा भ्रुवोर्मध्ये चित्रामुद्रामथोंगुलीम्[2] ।

नेत्रमुद्रा प्रयोक्तव्या स्वस्थः सर्वैः दक्षिणः ॥

---

३४· १३, १४,४ [अग्निप्राकारमुद्रा]

१·पाद्म [च.]२२, १२,३

कनिष्ठादितिभिर्बध्वा मुष्टिं साङ्गुष्ठमुन्नताम् ॥

विधाय तर्जनीं तेन भ्रामयेदाशु सत्वरम् ।

अग्निप्राकारमुद्रेयम् - - - - ॥

२·शैप्र, ४४, ५०,१

प्रसार्य तर्जनीमन्यां मुष्टीकृत्य च मस्तकम् ॥

तर्जन्या भ्रामयेत् सा तु वह्निप्राकारमुद्रिका ।

३·चि, सि, ६, ६८,१

विहाय तर्जनीं सम्यगङ्गुष्ठेन करांगुलीः ॥

निबध्य भ्रामयेत् सम्यगग्निप्राकारसंज्ञिका ।

---

१ गुलीम् [?]  २· मथो. [?]

३५· <u>१३, १६,७</u>

[योगमुद्रा]

<u>१· सनत्कु [ऋ.चि.] २,८७,८</u>

जंघे वामं तु विन्यस्य करमुद्राभितः[1] पुनः ।

दक्षिणाग्रं[2] तथा कृत्वा तस्योपरि निवेश्य च ॥

अंगोष्ठितांगुली या तु योगमुद्रेति सा स्मृता ।

<u>२· पाद्म [उ.] २२, १४,४</u>

नाभेरधस्तान्निन्यस्य सव्यं करतलं पुनः ।

उत्तानमितरं तस्य विन्यसेदुपदादृशौ ॥

योगमुद्रा – – – – – ।

<u>३· मीप्र. ४४, ७२</u>

योगमुद्रा करतलं वामं नाभेः समीपगम् ।

उत्तानीकृत्य तदधि दक्षिणं च तथा न्यसेत् ॥

<u>४ चि. सि. ४. ६७७,८</u>

योगमुद्राभितः शृणु ।

नाभेरधस्तान्निन्यस्य सव्यं करतलं पुनः ।

उत्तानमितरं तत्र निन्यसेत् करोद्गमम् ।

इयं तु योगमुद्रा स्यात् – – – ॥

---

३६· <u>१३, १८,१</u>

[योगसंपुटमुद्रा ]

<u>१· पाद्म [उ.] २२,१४,६</u>

करतलं सव्यं नाभेरधस्तनः ॥

---

१ . मुद्राभितं [३] २ दक्षिणं च [३]

आद्याङ्गुष्ठं तदुपरि सव्ये करतलं[1] पुनः ।

तमाङ्गुष्ठं विन्यसेद्योगसंपुटमुद्रिका ॥

२· वीप्र. ४४, ११४-॥७३

~~अंगुष्ठाभ्यां तु करयोस्तर्जनी मध्यमा न्तिमौ-~~ ।
विधाय पूर्ववद्वामं दक्षिणं ~~चाप्यधोमुखम्~~ ।
~~स्पृशेदितरः ताताः आद्याभिर्ग्रथयेत्~~ ॥
क्रियते यदि सा प्रोक्ता योगसंपुटमुद्रिका ॥
~~संपुटमुद्रेति विधेया – – – –~~ ।

---

३७. १३, २१
[ब्राह्मीमुद्रा]

१· सनत्कु [ऋ षि.] २, ३३

यतौ हस्तौ पुटौ कृत्वा ग्रहणं च परस्परम् ।

अंगुलीभिः समस्ताभिर्ब्रह्ममुद्रेति सा स्मृता ॥

२· पाद्म [पू.] २२, २६,७

अंगुलीभिः समस्ताभिर्दक्षिणोत्तरहस्तयोः ॥

संपुटीकरणं ब्रह्ममुद्रा संकथिता बुधैः ।

३· पु. ३३, १६,७

सर्वाङ्गुलीनां संश्लिष्टरूपयोः करयोरपि ॥

ब्रह्ममुद्रेति कथिता – – – – ।

---

३८. १३, ३०
[विष्णुमुद्रा]

१· पाद्म [पू.] २२, २७,८

अंगुष्ठे द्वे कनिष्ठे द्वे तथा स्यात्तर्जनी तयोः ॥

संयुक्ताग्रतः श्लिष्टा विष्णुमुद्रेति कीर्तिता ।

~~१ सव्येतरकरं [पु]~~

४१. <u>१३, ३३</u> | १. पाद्म [च.] २२, ३०,१

[भिन्नराजमुद्रा]

सर्वकनिष्ठाङ्गुली: सव्यकर्णे[1] न्यस्य सवेतरम् ॥

प्रसारेद्भिन्नराजाख्या मुद्रा विघ्नविनाशिनी ।

---

४२. <u>१३, ३४</u> | १. पाद्म [च.] २२, ३१,२

[भागवतीमुद्रा]

अन्यत्तु तर्जनीयुग्मं संहृताङ्गुष्ठकद्वयम् ॥

मुद्रा भागवती सा स्यात् - - - ।

---

४३. <u>१३, ३५</u> | १. पाद्म [च.] २२, ३२

करयुग्मं[2] तु संपुटे ।

कृते वराहमुद्रा सा सर्वसिद्धिकरी शुभा ॥

[वराहमुद्रा]

---

४४. <u>१३, ३६-७</u> | १. पाद्म [च.] २२, ३३-४

[दहन (अग्नि) मुद्रा]

अधस्तात्करतले संस्मरेद्रक्तपङ्कजम् ॥

तन्मध्ये बिन्दुवेदाग्निं त्रिकोणं तेजसां निधिम् ।

अधोमुखं करतलं कृत्वा द्रव्योपरि न्यसेत् ॥

सेयं दहनमुद्रेणा - - - - ।

<u>२ ई २३, ४२,३</u>

ऊर्ध्वे करतले रक्तपङ्कजं भास्करं स्मरन् ॥

कृत्वाग्नि संपुटेनेन मुद्रेणा दहनात्मिका ।

---

१ सव्य. [?]   २ कुम्भे [?]

| | |
|---|---|
| ५५· १३, ३७ -९ | १·पादम [च.] ३३, ३४ -७ |
| [आप्यायनमुद्रा] | मध्ये करतले श्वेतपंकं ज्योत्स्नासदम् ॥ |
| | कलाज्योत्स्नासंयुक्तं वर्णितं पंकजासन । |
| | तन्मध्ये बिन्दुविस्था तु ज्याकितं वामृतं भवेत्[1] |
| | येनामृतेन तद्भस्मना सिक्तं पूरितं स्मरेत् । |
| | आप्यायनस्य मुद्रेणा कथिता कमलासन ॥ |
| | २·पु. ३३, २६,७ |
| | सव्यहस्ते तथा पद्मं ज्योत्स्नाच्छदसंयुतम् । |
| | तस्मिन् चन्द्रं स्थितं ध्यात्वा पीयूषस्त्राविनं तथा ॥ |
| | अधोऽङ्मुखेन हस्तेन द्रव्याणामुपरि न्यसेत् । |
| | आप्यायनस्य मुद्रेणा - - - - ॥ |
| | ३·ई. २४, ३३, ३ |
| | वामहस्ततले श्वेतपंकजे वह्निं स्मरन् ॥ |
| | द्रव्याणि संप्लुयेत् येन मुद्राप्यायनात्मिका । |

---

| | |
|---|---|
| ५६· १३, ३९ -४१ | १·पादम [च.] ३३, ३८-४० |
| [औरभ्रेयी [सुरभि] मुद्रा] | अंगुष्ठे द्वे कनिष्ठे द्वे तथा स्यात् तर्जनी द्वयो:[2] । |
| | [3]स्थित्वं प्रसार्येदूर्ध्वमन्याङ्गुलानि करद्वये ॥ |
| | मध्यमां दक्षिणकरेऽनामिकां च तथेतरे । |
| | संहृत्य प्रसार्येन्यं करयोरुभयोरपि ॥ |

१ स्मरेत् [?] २ द्वयम् [?] ३ स्थितम् [?]

६४. <u>१३. ६७,८</u>

[शंखपद्मनिधिमुद्रे ]

<u>१ ब. ८. ८८</u>

निधी स्वरूप्य शंखस्य वामहस्तात् कनिष्ठिका ।

पद्मा न्यस्याधराङ्गुष्ठात् सैव परोर्णीकृता यदा ।।

<u>२ श. ब. ३४. ६३,२</u>

मुद्रा शंखनिधेः प्रोक्ता वामहस्तात् कनिष्ठिका* ।

[* अनुस्यापितेत्यध्याहारः ]

---

६५. <u>१३. ६८,१</u>

[चक्रमुष्टिमुद्रे ]

<u>१. मन्त्र [ ऋ कि ] २. १,८</u>

मुष्टिमुद्रा तु मुष्टिः स्यादंगुष्ठेन तु पीडितम्[१]।

\+ \+ \+ \+

\+ \+ \+ \+

अंगुष्ठानामिकाभ्यां तु तथा वै चक्रमुद्रिका ।

<u>२. पाद्म [ च ] २२. ४२</u>

अंगुष्ठानामिकाभ्यां तु तदा स्याच्चक्रमुद्रिका ।

मुष्टिमुद्रा तु मुष्टिः स्यादंगुष्ठेन तु वेष्टिता ।।

<u>३. कपि, २७. १९</u>

पूर्वमुष्टिमुद्रा तु अंगुष्ठेन तु वेष्टिता ।

---

६६. <u>१३. ६९,७०</u>

[ज्ञानगन्धमुद्रे ]

<u>१. मन्त्र [ ऋ कि ] ३,३</u>

ज्ञानमुद्रेति विज्ञेया सैव मुद्रा[२] कनिष्ठिका ।

गन्धमुद्रा तु विज्ञेया विमुक्तो[३]ऽनामिका च या ।।

१ सा पीडिता: [?] २ मुक्त. [?] ३ विमुक्तानामिका [?]

२·पाद्म [च.] ३२, ६३

स्नानमुद्रेति[1] विज्ञेया सैव मुक्तकनिष्ठिका ।

गन्धमुद्रेति विज्ञेया विमुक्तानामिका च सा ॥

३·कपि, २७, ११,२०

स्नानमुद्रेति विज्ञेया[2] मध्यमुक्तकनिष्ठिका ॥

गन्धमुद्रेति संप्रोक्ता विमुक्तानामिका च सा ।

---

६७. ११, ७०,१

[पुष्पयज्ञोपवीतमुद्रे]

१·सनत् [अ.पि.] २, ३,७

विमुक्तमध्यमा सैव पुष्पमुद्रेति कीर्तिता ।

\+ + + + +

\+ + + + +

\+ + + + +

मध्यमाङ्गुष्ठशिरसोः संस्पृष्टाग्रपर्वणा ।

यज्ञोपवीतमुद्रा सा विस्तृताभ्यङ्गुलिं[3] क्रमात् ॥

२·पाद्म [च.] ३३, ६२,३

पुष्पमुद्रेति विज्ञेया विमुक्ता मध्यमा तथा ।

मध्यमाङ्गुष्ठशिरसि संस्पृष्टाग्रपर्वणा ॥

यज्ञोपवीतमुद्रा स्यात् - - - ।

---

१ स्नान [?]  २ विज्ञेया सैव मुक्त [?]  ३. अङ्गुलिका [?]

६९. १३, ७२,३

[धूपमुद्रा]

१. सनत्कु [ज्ञा वि.] २,६

संहृताग्रांगुली या तु कृत्वाव्यतिकरांगुलिः ।

सहैवोर्ध्वीकृताङ्गुष्ठा कराभ्यां धूपमुद्रिका ॥

२. पाद्म [च.] ३२, ६६

संहृताग्राङ्गुलीनां तु कृत्वा[1] व्यतिकराङ्गुलिः ।

सहैवोर्ध्वीकृताङ्गुष्ठौ[2] कराभ्यां धूपमुद्रिका ॥

३. पु. ३३,२०,१

बध्निहमंगुलीनां तु समा विसष्टाग्रबन्धनम् ॥

ऊर्ध्वाङ्गुष्ठौ तथा कृत्वा धूपमुद्रा प्रकीर्तिता ।

४. कपि. ३७, ३३,४

संहृताग्राङ्गुलीनां तु कृत्वा[3] व्यतिकराङ्गुलीः[4] ।

सहैवोर्ध्वीकृताङ्गुष्ठा कराभ्यां धूपमुद्रिका ।

---

७०. १३, ७६,७

[प्रतिमामुद्रा]

१. सनत्कु [ज्ञा वि.] २, १२,३

या वाप्यूर्ध्वीकृताङ्गुष्ठा संहृताङ्गुलिका स्मृता ॥

सा ज्ञेया प्रतिमामुद्रा - - - -।

२. पाद्म [च.] ३२, ६९,७०

या वाप्यूर्ध्वीकृताङ्गुष्ठा शेषाभिर्मुष्टिभिः कृता ॥

सा ज्ञेया प्रतिमामुद्रा - - - - ।

---

१ कृत्य [?] २ ङ्गुष्ठा [?] ३ कृत्य [?] ४. ङ्गुलिः [?]

३·पु. ३३, ३३

सोऽर्धाङ्गुष्ठे तु[1] या मुष्टिमुद्रा सा प्रतिमा स्मृता ।

४·शीप्र. ४३, १०४.४

ऊर्ध्वाङ्गुष्ठं दक्षिणं तु मुष्टीकृत्य प्रदर्शयेत् ॥

मुद्रेयं प्रतिमा देवि – – – – ।

---

७१. १३, ७७.८ [स्वागत–प्रार्थना–ध्यानमुद्राः]

१·पादम [च.] ३२, ७०.१

उत्तानीकृत्य हस्तौ[2] च वक्रिताङ्गुलिभिः क्रमात् ॥

अङ्गुष्ठं च पृथक् कृत्वा ज्ञेया स्वागतमुद्रिका ।

सा चैव प्रार्थनामुद्रा सा ज्ञेया ध्यानमुद्रिका[3] ॥

२· पु. ३३, ३४

उत्तानाभ्यां च हस्ताभ्यां किञ्चिदाकुञ्चिताङ्गुलीः ।

पृथक् कृत्वा स्यात् गुष्ठौ ज्ञेया स्वागतमुद्रिका ॥

---

७२. १३, ७९.८० [ग्रासमुद्रा]

१·सनत्कु [ऋ.पि.] २, १६.७

पंचाङ्गुलीनामग्रेषु या धाच गुष्ठाग्रसंस्थितिः ॥

ग्रासमुद्रा तु विज्ञेया वह्निहोमे प्रदर्शिता ।

२·पादम [च.] ३२, ७२.३

पंचाङ्गुलीनामग्रं तु संयोज्य कमलासन ।

---

१ .ङ्गुष्ठा [?]  २ हस्तौ [?]  ३ ध्यान [?]

अनाख्येन[1] वामेन पाणिना दक्षिणेन च ॥

निबोध पद्मान्नादि मुद्रा सा प्राञ्जलिका ।

<u>३·पु. ३३,२२,३</u>

अंगुलीनां तु पंचानामग्रं संयोज्य यत्नतः ॥

दक्षिणेन करेणैव मुद्रा सा प्राञ्जलिका ।

<u>४·शीप्र. ५३,१११</u>

पंचांगुलीनामग्रं तु योजयेद्ग्रासमुद्रिका ।

<u>५·चि. ति. ३. ६८०</u>

सर्वेषामंगुलाग्राणामेकत्र तु संगतिः ।

महती ग्रासमुद्रेणा - - - ॥

---

७३· <u>१३, ८०,१</u>

[धान्यवपन [होम] मुद्रा]

<u>१·पाद्म[स.] २२, ७३,४</u>

मध्यमानामिकाभ्यां तु अंगुष्ठाग्रेण[2] संगतिः ॥

कनिष्ठातर्जनीयुग्मं दीर्घीकृत्य यथाक्रमम् ।

सिद्धौ स्थिरादीनां होमकर्मणि शस्यते ॥

<u>२·शीप्र. ४४, ११२,३</u>

मध्यमानामिकाभ्यां तु स्पृष्ट्वाङ्गुष्ठं मेलयेत: ।

कनिष्ठातर्जनीयुग्मं दीर्घीकृत्वा[3] विचक्षणः ॥

धान्यपुष्पफलादीनामिमां होमे नियोजयेत् ॥

---

१ अन्या. [?] २ ग्रन्थ [?] ३ कृत्य [?]

<u>३·वि. ति. ४, ६७८.१</u>

मुद्रां ग्रासाह्वयां शृणु ॥

अनामिका मध्यमयोरंगुष्ठाङ्गुली संगतिः ।

आहुति ग्रासमुद्रा स्यात् होमे प्राणाहुतौ मता ॥

---

७४. <u>१३. ८२-४</u>  <u>१·प. ८. ५९,६०</u>

[आधारवल्लिकूर्माकाराभिन मुद्रे]

जिह्वामंगुलियुग्मं तु मुष्टिभ्यामन्तरे शिव ॥

वामस्य दक्षिणाग्रे मुष्टिः पृष्ठे स्यात् स्पर्शवर्जितः ।

आधाराधारवल्ली च ऊर्ध्वसः कूर्मवद्भिव[2] ॥

---

७५. <u>१३. ८४,६</u>  <u>१·प. ८. ६१-२</u>

[अनन्तासनमुद्रा]

अधोमुखस्य वामस्य अनामा तर्जनी उभे ।

आकुंच्य पृष्ठलग्ने तु मध्यमायां तु संस्थिते ॥

तयोरधस्तान्मध्याच्चाङ्गुष्ठौ कुर्यादधोमुखाम्[3] ।

कनिष्ठिका तु साङ्गुष्ठा कार्या मुकुला मुने ॥

अनन्तासनमुद्रेयमनेनाख्या [ख्या ?]ता शिव ।

<u>२·स. सं. ३४. ४०-२</u>

अधोमुखस्य वामस्य ह्यनामा तर्जनीद्वयम् ।

आकुंच्य मध्यमापृष्ठे विन्यसेत् कुञ्चितयतम् ॥

अङ्गुष्ठाधोमुखीं कुर्यान्मध्यमामंगुलीं तथा ।

---

१ ग्रेण [?]  २ वह्निना [?]  ३ मुखीम् [?]

प्रत्येकबन्धे संलग्नमंगुष्ठयुगलं न्यसेत् ॥

धर्मादेश्च चतुष्कस्य विद्धि मुद्रागणं क्रमात् ।

२·प, ई.३४, ४९-५१

करद्वयमसंलग्नं कृत्वा तदनु योजयेत् ।

मुखे मुखं तु तर्जन्योरेवं मध्यमयोः क्रमात् ॥

अनामयोस्ततः पश्चाद्वक्त्रे वक्त्रं कनिष्ठयोः ।

अंगुष्ठयुगलं तद्वदङ्गुली मूलयोर्न्यसेत् ॥

एतन्मुद्राचतुष्कं तु धर्मादि तु चतुष्टये ।

अधर्मादिचतुष्काणां तन्मुद्राचतुष्टयम् ॥

३·ई. ३४, ५७ -९

करद्वयमसंलग्नं कृत्वा तदनु योजयेत् ।

मुखे मुखं तर्जनीभ्यां च मुखेन मध्ययोः ॥

कुर्यात् तत्र तादृग्विधं बन्धं तं स्वस्वानामिकाद्वये।

उपसंहृत्य तं वापि द्वे कनिष्ठे नियोजयेत् ॥

प्रत्येकबन्धे संलग्नमंगुष्ठयुगलं न्यसेत् ।

धर्मादेश्चाप्यधर्मादेरिदं मुद्राचतुष्टयम् ॥

---

७९· १३, १३,४ १·प, ८, ७६ -८

[आमायमुद्रा] दक्षिणस्य तु हस्तस्य तर्जन्यङ्गुष्ठमेलनम् ॥

कृत्वा तदनु तद्बन्धं विकास्य च शनैः शनैः ।

---

१. सन्मं [?] २ सं [?]

पंच वृत्तानि विन्यानि समान्येवं तु मध्यमम् ।

कर्णिकाक्षेत्रमेतत् स्याद्बहिर्विम्बं त्रिधा पुनः ॥

विभज्य सूत्रमार्गेण प्रथमा केसरावनिः ।

दलभूमिर्द्वितीया तु तृतीया नाभिमण्डलम् ॥

तदेवं त्रिविधं वापि त्रिविधं सूत्रवर्त्मना ।

विभजेन्नाभिभागाद्बहिर्द्वे मण्डले भवेत् ॥

अतोऽर्ध्वं? बहिर्नेमिभूरेकं मण्डलं भवेत् ।

कोष्ठैरष्टाष्टविंशत्या परितो बहिरासनम् ॥

चतुर्थं भवेत्कोष्ठैरधोरस्या? वीथिका बहिः ।

पंक्तिद्वयेन विस्तारम् चतुरस्राद्बहिः पुनः ॥

कोष्ठानि द्वादशाधिक्यं सर्वं पंक्तिद्वये भवेत् ।

प्रत्यार्धं तेषु कोष्ठेषु चतुर्द्वारं प्रकल्पयेत् ॥

कोष्ठैश्चतुर्भिः प्रत्येकं द्वयोः पंक्त्योश्चतुर्षु ।

चतुर्षु कोणेषु तथा प्रत्येकं ~~द्वयोः पंक्त्योश्चतुर्षु~~ ।
शोभासिद्धये ॥

कोष्ठद्वयं तु संमार्ज्य द्वयोः पंक्त्योश्चतुर्षु ।

प्रतिद्वारं तदभ्यर्णे पार्श्वयोरुभयोरपि ॥

[1]कण्ठशोभाप्रसिद्ध्यर्थं द्वारस्यानन्तरस्थयोः ।

द्वे द्वे कोष्ठे बहिः पंक्त्यामेकैकं तदनन्तरम् ॥

संमार्ज्यमेवं शोभार्थमेकैकं बहिरन्यतः ।

---

१ कर्ण. [पाठान्तरम्]।

पिपीलिकोदराभानि परस्परसमानि च ।
अन्तरालानि तैरेवां तुल्यमानानि पद्मवत् ॥
ईदृशं मण्डलं कार्यं वासुदेवसमर्चने ।
नारायणे तु वक्तव्ये विन्यासाः[1] पूर्वमीरिताः ॥
अष्टावष्टौ विभक्तव्याः केसरान्तरितः क्रमात् ।
पूर्वोदितानि कोष्ठानि मार्जयित्वा यथाक्रमम् ॥
निरंकुशत्र नाभ्यादि विना पद्मं प्रकल्पयेत् ।
शंकुमाहृत्य सूत्रेण वर्तनं विभजेत् त्रिधा ॥
प्रथमं कर्णिकार्थं द्वितीयं विभजेत् त्रिधा ।
निष्कासं केसरार्थं दलदीर्घमनन्तरम् ॥
तृतीयमन्तरालं स्याद् दलपार्श्वयोर्द्वयोः ।
अष्टौ द्वादश वा कुर्याद् विन्यासान् क्रमशस्तु ॥
मण्डलं भद्रकं नाम तदिदं सर्वकामदम् ।
विकीर्णान् स्वस्तिकं चिन्हं कोणे षड्विंशता युतम् ॥
संसृज्य तत्र कोष्ठानि एकं दश च पातयेत् ।
प्रागायतानि सूत्राणि उदीचीनायतानि च ॥
संसृज्य मध्यतो द्वे द्वे वीथीं प्रागायतामपि ।
तथोदगायतामेकां कुर्यान्निर्गमनं पुनः ॥

---

१ विन्यासाः [पाठान्तरम्]

प्रागायताभ्यां कोष्ठाभ्यां बहिः पंक्तावुदङ्मुखम् ।

प्राचीनं पश्चिमं चापि दक्षिणाग्रमिष्यते ॥

स्योदगायताभ्यां स्यादुदक् प्रत्यङ्मुखं शुभम् ।

दक्षिणाग्रं भवेत् प्राच्यामिति स्वस्तिकमीरितम् ॥

द्विधा विभज्य पूर्वोक्तं चतुष्षष्टिकोष्ठमण्डलम् ।

मध्यतः पद्मकल्पनमवशिष्टे द्विधा कृते ॥

ताभ्यां वृत्तं भागाभ्यां ' भ्रान्तं वृत्तस्य मण्डलम् ।

अवशिष्टेन भागेन स्यान्तरालं भवेद्बहिः ॥

सौरमण्डलमेतत् स्यादेतदेवेन्दुमण्डलम् ।

सर्वेषामेव बिम्बानां पीठाद्बाह्यं यथापुरम् ॥

विना विदध्यात् पीठादीन् केवलं न च पङ्कजम् ।

चक्रं विना वा पद्मं स्यात् कर्तुः शक्तिसमीहया ॥

२· वि. शि. ७. १४४- ४६

चक्राब्जमण्डलं ब्रह्मन् वर्णैर्वेदिकोपरि ।

वेदिकां प्रोक्षयेद्विप्रः तदा पुण्याहवादिभिः ॥

चन्दनार्द्राणि कूर्चाणि प्राङ्मुखोदङ्मुखान्यपि ।

निधाय सप्तदश च वेदिकायां ततः परम् ॥

पदेषु तत्र प्राप्तेषु चतुष्षष्टिपदान्यपि ।

सीमार्थं स्थाप्य तन्मध्ये शङ्कुमेकं प्रलम्बनः ॥

समानि पंचवृत्तानि यथा स्युस्तथा विन्यसेत् ।

२३५

तथा सूत्रं भ्रामयित्वा मध्यमां तु कर्णिकाम् ॥
केसरं च दलं नाभिं द्वितीये परिकल्पयेत् ।
तृतीयं च तुरीयं चाप्यवकाशं प्रकल्पयेत् ॥
पंचमेनैव सूत्रेण कल्पयेन्नेमिमण्डलम् ।
पीठिकां कल्पयेत्पश्चादष्टाविंशतिभिः पदैः ॥
बहिः पंक्तिद्वयेनाथ वीथिं वीथिकामपि ।
बहिः पंक्तिद्वयेनाथ चतुरस्रं प्रकल्पयेत् ॥
ततः प्रतिदिशं ब्रह्मन् मध्ये मध्ये चतुष्पदैः ।
द्वाराणि कारयेद् ब्रह्मन् प्रागादिषु चतुर्ष्वपि ॥
द्वाराणां पार्श्वयोर्बाह्यद्वयमायामं छेदुभे उभे ।
एकैकमन्तरद्वयमायां शोभार्थं मार्जिते पदे ॥
तत्पार्श्वे बहिरेकेन चान्तर्बाह्यां त्रिभिः पदैः ।
शोभा त्रिभिः पदैरूर्ध्वमन्तरेकेन छेदिते ॥
उपशोभेति कथिता शोभापार्श्वे प्रकल्पयेत् ।
उभयोः पार्श्वयोर्द्वारमेवं कृत्वा चतुर्दिशि ॥
पदाभ्यामेव शिष्टाभ्यां कोणे कोणे प्रकल्पयेत् ।

---

९४. <u>१९, २३-२८</u>  <u>१. पाद्म [च.] ७, ३७-४२</u>

[मण्डलेषु वर्णविन्यासः]

मण्डलं शोभयेद्रम्यैः पंचवर्णैः सितादिभिः ।
तच्चूर्णैरथवा चूर्णैर्लोहैर्वापि धातुभिः ॥

चन्दनागुरु कृष्णादिगन्धचूर्णैरथापि वा ।
शाल्यादितण्डुलैः पिष्टैः सितैर्हारिद्रिभिरम्बुज ॥
पुष्पगन्धैरथचूर्णैरसितैर्वा विकेशरैः ।
श्यामैः शुक्लैरथ चूर्णैः कौसुम्भैरपि पाटलैः ॥
मिश्रचूर्णैः प्रशस्तैर्वा पञ्चवर्णैश्च कालवैः ।
शोभयेत्कर्णिकादीनि यन्त्राणि बुद्धिमान् ॥
चूर्णैरेव च रत्नादिद्रव्यैराकारशोभनम् ।
अन्तरालानि सर्वत्र कृष्णैः श्यामैरथापि वा ॥
शोभयेत् कर्णिकां पीतैः शुक्लैर्बिन्दून् विशोभयेत् ।
पाटलैः कर्णिकारेखां कृष्णैर्वा केसरावलिम् ॥
द्विधा कृत्वा पूर्वभागं रक्तैर्भागमथोत्तरम् ।
पीतै रक्तैर्विदिशामेषु प्रलिखेत्सुधीः ॥
बिन्दून् विदध्यात्कृष्णैस्तु दलकोटिषु रेखयेत् ।
जालान्तानि च वर्णानि सितरक्तैर्विशोभयेत् ॥
वह्निस्थलं रक्तैः सितैर्वा पूरयेत् पृथक् ।
श्यामैः पीतैश्च रक्तैश्च नाभिरेखाश्रयं क्रमात् ॥
द्विधा भित्त्वा श्यामपीतैः श्यामैरेकेन भित्तिके ।
रेखयेच्छ्वेतैरेव स्वस्तिकोदराणि तु ॥
रक्तैरन्तःस्थलं कृष्णैर्मध्यस्थवेदिकाम् ।
सितैर्निम्नजभागं द्विधा कृत्वैकमादितः ॥

पूज्या द्वारेषु चण्डाद्या द्वौ द्वौ प्रति चतुर्ष्वपि ॥

ईशानकोणे स्थाप्यायां विष्वक्सेनं समर्चयेत् ।

गरुडोऽभिमुखस्तिष्ठन् पूर्वद्वाराद्बहिः स्थितः ॥

चक्रं च दक्षिणद्वारि गदां च द्वारि पश्चिमे ।

पद्मं चोत्तरे शंखं प्रथमावरणे स्तः ॥

विष्ण्वादिमूर्तयः पूज्या द्वादशाब्जेषु पद्मग ।

अनन्तरे ह्यावरणे पद्मेषु द्वादशस्वपि ॥

वासुदेवादिकृष्णान्ता मूर्तयो द्वादशैव ते ।

पद्मेष्वावरणे बाह्ये द्वादशादित्यपूजनम् ॥

एतस्मिन् मण्डले देवं वासुदेवं समर्चयेत् ।

बिम्बे नारायणाख्ये तु बिन्दुष्वष्टसु चाक्षरान् ॥

अष्टाक्षराणां न्यसनं व्याख्याताः ततोऽष्टधा

केशरेषु समाराध्या दलेष्वष्टौ श्रियादयः ॥

अरेष्वष्टसु शंखादीन्यायुधान्यष्ट पूजयेत् ।

चतुर्विंशतिपद्मेषु चतुर्विंशतिमूर्तयः ॥

त्रिषु ह्यावरणेष्वेषु पूज्यास्तन्मण्डले हरिम् ।

नारायणं समावाह्य यजेत परमेश्वरम् ॥

---

६६· १७. २ पाद्म [च. ] १०.७

[महोत्सवविधयः] नित्यो नैमित्तिकः काम्यो काम्यस्त्रिविधः स महोत्सवः।

८७· <u>१७, ३-४</u> — <u>पाद्म [उ.] १०, ८.१</u>

[नैमित्तिकोत्सवलक्षणम्] नित्यो

कुम्भे च सिंहमकरे विषुवे चायनद्वये ।
कल्पितानुत्सवानाहुः नैत्यिकाः सर्वदैवतैः ॥
नैमित्तिकः स विज्ञेयो निमित्ते सति कल्पितः ।

---

८८· <u>१७, १९-२१</u> — <u>पाद्म [उ.] १०, ३६.७</u>

[प्रथममहोत्सवे निषिद्धः कालः]

अधिके मासि शुक्रादौ गुरौ चास्तमिते सति ।
नोत्सवः प्रथमः कार्यः कम्पने राजराष्ट्रयोः ॥
प्रजानां चैव दुःखं स्याद्व्याधिर्वा मृतिरेव वा ॥
उत्सवे च क्रियावादौ मोक्षदोषः क्वचन ॥

---

८९· <u>१७, ४३-४</u> — <u>पाद्म [उ.] १०, ९९-३</u>

[गरुडस्तुतिः]

पक्षौ यस्य बृहत्सामरथन्तरमपि स्वयम् ।
अक्षिणी चापि गायत्री <u>त्रिवृत्साम शिरः</u> स्मृतम् ॥
<u>स्तोम आत्मा नमस्तस्मै वामदेव्याङ्गसंविदे</u> ।
<u>नमः प्राणादिवायूनामाधाराय</u>[1] गरुत्मते ॥
<u>दोषानपनयाखण्डान् गुणानावह सर्वतः</u> ।
<u>विघ्नानि हर सर्वाणि</u> आरब्धान्कुरु मामपि ॥

---

९०· <u>१७, ७६</u> — <u>१·पाद्म [उ.] १०, १०२</u>

[ध्वजस्तम्भस्थापनम्]

अग्रतो बलिपीठस्य बहिर्वा धामगोपुरात् ।

१ धानाय गरुत्मते - पाठा.

ध्वजस्तम्भं खनेद्भूमौ निर्मितं दारुं स्थिरम् ॥

---

१३. १७, ७७,८

[ध्वजस्तम्भोपयोगिदारूणि]

१. ई. १०, ३४२,३

अन्तःसारश्चन्दनादिः प्रशस्तः स्तम्भकल्पने ।

क्रमुकादिर्बहिःसारः सोऽपि शस्तो मुनीश्वराः ॥

किंशुकाद्यं तु निःसारं वर्जयेत् स्तम्भकर्मणि ।

२. पाद्म [क्रि.] १०, १०३,४

क्रमुकादि बहिःसारं प्रशस्तं विदुरुत्तमम् ॥

अन्तःसारं चन्दनादि प्रशस्तं स्तम्भकल्पने ।

निःसारं वर्जयेत् स्तम्भम् - - - - ॥

---

१४. १७, ७८-८०

[ध्वजस्तम्भमानम्]

१. पाद्म [क्रि.] १०, १०४,५

हस्ततालायतं शुभम् ॥

मानाङ्गुलप्रमाणेन विंशत्यूनमथापि वा ।

प्रासादोच्छ्रायमथवा यद्वा गोपुरसंमितम् ॥

२. अग्, ६.३०

विमानोच्छ्रायमेवं च गोपुरोच्छ्रायमेव च ॥

३. अजि. ३०, १००

प्रासादोच्छ्रायमानं वा गोपुरोच्छ्रायकं भवेत् ॥

४. कपि. २२, ४६,७

हस्तादसमायामं सर्वं वा द्विजोत्तम ।

२४३.

अथो विस्तारमथवा प्रासादोच्छ्रायमेव वा ॥

गोपुरोत्सेधमार्धं वा - - - - ।

५· चि. वि. ३१, १३

गोपुरायामतुल्यं वा विमानोच्छ्रायमेव वा ।

६· मा. ३१, १०७

गोपुरायामतुल्यं वा विमानोच्छ्रायमेव वा ।

७ वि. प. [ पा. ४ ] ११, ९.

गोपुरायामतुल्यं वा विमानोच्छ्रायमेव वा ॥

---

१३· १७, ८९-९

[ध्वजयष्टिसंयोजनम्]

१· पाद्म [च.] १० -१०९ -११०

तस्य शाखाश्रितानां वेदितानां तु मूलतः ॥

अष्टानामपि पीठानां स्तम्भाग्रे विनिवेशनम् ।

आयतानि च पीठानि त्रिशतेन चतुर्भि ॥

त्रिकोणानि षडंशे स्वर्धेन स्वर्धेन घनानि च ।

मूले स्थूलानि सूक्ष्माणि चाग्रे कुर्वीत भूषणाम् ॥

अग्रे पीठद्वये छिद्रे ध्वजयष्टिं च संकृताम् ।

निवेशयेच्छिद्रयित्वा ध्वजस्तम्भं चतुर्भि ॥

निवेशयेत्त्रिणुकं वा नव वा सप्त पंच वा ।

---

१४· १७, ८४ -८

[ध्वजस्तम्भस्थापनम्]

१· पाद्म [च.] १०, १११ -४

आराध्य वेदविद्भिः प्रागर्ध्यं स्थापयेद्गुरुः ।

[यागकुण्डकल्पनम् ]- . . . . . . . शेषाः प्राच्यां प्रकल्पयेत् ॥

कुण्डमाहवनीयस्य चतुरस्रं यथोदितम् ॥

दक्षिणस्यां दक्षिणाग्नेर्दिशि चापसमाकृति ।

कुण्डं तु गार्हपत्यस्य प्रतीच्यां वृत्तमुत्तमम् ॥

सभ्यस्य कुण्डं कौबेर्यां त्रिकोणं तदनन्तरम् ॥

ऐशान्यामग्निकोणे वा कुण्डं च चतुरस्रकम् ॥

आवसथ्यस्य विहितः पंचाग्न्युक्तमुत्तमम् ।

आवसथ्यरहितं चतुरग्निं चतुर्दिशि ॥

सभ्यावसथ्यरहितं त्रेताग्नित्रयसंयुतम् ।

एकमाहवनीयं वा कल्पयेत्कर्तुरिच्छया ॥

---

१००· १८, १३०    पाद्म [च.] ११, १३३

[एकबेरविधाने मूलबिम्बे एव अभिषेकः ]

एकबेरविधाने तु मूलबिम्बेऽभिषेचनम् ।

प्रत्यहं स्नपनं कुर्याद्विधायावित्त[1] यथाविधि ॥

---

१०१· १९, ४ -१०    पाद्म [च.] ८, ७ -११

[स्नपन विधिः ]

कर्तव्यं सन्निधा ब्रह्मन्नुत्तमाधममध्यमम् ॥

जात्युत्कर्षं धनोत्कर्षमपेक्षायैव तत्त्ववित् ।

प्रत्यंशीसोत्सवं स्नानमितरेष्वितरद्भवेत् ॥

---

१ वसु -पाठान्तरम्

आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ॥

घृतं शुक्रमसीत्येवं मध्वा नि सह योजयेत् ।

विष्णुगायत्रिया वाऽपि पंचोपनिषदैस्तु वा ॥

---

१०४. <u>११, १०३-७</u> | <u>पाद्म [च,] १२८-३०</u>

[पंचगव्यप्रमाणम्]

दधि त्रिगुणमाधारात् पीयूषं त्रिगुणं ततः ॥

षड्गुणं घृतमेतत् स्याच्छकृदादि चतुर्गुणम् ।

स्नपने कथितं मानं प्रोक्षणे पंचकं समम् ॥

गोमयेन समं मूत्रं दधि स्याद्द्विगुणं ततः ।

ततश्चतुर्गुणं सर्पिः सर्पिषोऽष्टगुणं पयः ॥

प्राशने पंचगव्यानां प्रमाणमिदमीरितम् ।

द्रोणमानं पंचगव्यं घृतमानं च तादृशम् ॥
तादृगेव दधि क्षीरं तावदेव च माक्षिकम् ।
अर्धं वा स्यात्पादकं वा न्यूनं चेदातुरं भवेत् ॥

गृहार्चास्नपने न्यूनं प्रत्येकैव प्रकल्पयेत् ।

---

१०५. <u>११, १२३-४</u> | <u>पाद्म [च,] ८, १२७-९</u>

[मध्यमकल्पेस्नपनभेदाः]

मध्यमोत्तममुद्दिष्टं मध्यमे मध्यमं पुनः ॥

चतुर्भिर्द्रव्यकलशैः स्नानं शुद्धोदकैर्विना ।

बाह्यैस्तैरेव देवस्य, मध्यमाधम उच्यते ॥

सर्वैरेव द्रव्यकुम्भैः सर्वैः शुद्धोदकैर्विना ।

---

१०६. <u>११, १३९-४१</u> पाद्म [उ.] ८. १६९-७१

[उत्तमकल्पे स्नपनभेदाः]

उत्तमोत्तमेषु स्नपनं पश्चिकाशीतिम् ।
सर्वकुम्भोदकैश्चापि भवेदुत्तममध्यमम् ॥
सर्वकुम्भोदकैर्निम्नमाधममिष्यते ।
विंशतिः पंच च प्रकृतम् संक्षेपे कलशा मताः ॥
चतुः चर्त्वं च विस्तारे सप्तत्रिंश त्रिकं परम् ।

---

१०७. <u>११, १४१-९</u> पाद्म [उ.] ८. १७१-८१

[स्नपनद्रव्याधिदेवताः]

द्रव्याणामथ सर्वेषां वक्ष्याम्यधिदेवताः ॥
शुद्धस्य परमात्मा च वासुदेवोऽधिदेवता ।
उष्णोदकुम्भे पुरुषः सत्यः स्यात्तु फलोदके ।
अच्युतो मार्जने देवस्त्वनन्तस्त्वक्षतोदके ।
रत्नोदके केशवः स्यात्सोहेनारायणः स्मृतः ॥
गन्धोदके माधवः स्याद्गोविन्दः स्याद्यवोदके ।
पाद्योदके भवेद्विष्णुरर्घ्ये च मधुसूदनः ॥
त्रिविक्रमस्त्वाचामे पंचगव्येषु वामनः ॥
दधिनि श्रीधरो देवो हृषीकेशः पयस्यपि ॥
मधुनः पद्मनाभः स्याद्दामोदरः कषायके ।
कुशोदके वराहः स्यान्नृसिंहश्चैत्नबोदके ॥
श्रीधरो नालिकेरस्य स्यात्स्यः शाल्मिलारिणः ।

वासुदेवो भगवत्य कुम्भस्य कमलासन ॥

सौराध्यम्बुकलशे देवः संकर्षणः स्मृतः ।

प्रद्युम्नः सर्वगन्धस्य मूलौषध्येऽनिरुद्धकः ॥

मूलौषधिषु कुम्भेषु साङ्गपीठं समर्चयेत् ।

कुशोदकेषु सर्वेषु नारायण-समर्चनम् ॥

धान्यानां रत्नानां च देवता स्यात् पुरन्दरः ।

सुवर्णानां देवतं चास्त्रं फलकानां सुदर्शनम् ॥

वाससां देवतं विष्णुः सर्वेषां वा जनार्दनः ।

इत्येवं स्नपनं प्रोक्तं नवधा तव पद्मज ॥

---

१०४. ३०, ९-३८

[स्नपन] कलशस्नपनम् ]

१· विष्व. २२, ११४ -३९

आद्यं तु मध्यमं भागं दैविकं तदनन्तरम् ॥

तृतीयं मानुषं भागं पदमेवं न्यसेत् क्रमात् ।

ब्रह्मस्थाने पदं कुर्याद् विकारांस्तु विनिक्षिपेत्[1] ॥

घृतमुष्णोदकं चैव रत्नाम्भः फलवारिणा[2] ।

तोयाभ्यां मार्जनं चैव गन्धाम्भोऽक्षतमेव च ॥

यवोदकं च इत्येते मध्यमे नवके न्यसेत् ।

तस्यैव परितः कुर्याद् दिक्ष्वष्टसु समन्ततः ॥

पाद्यार्घ्याचमनीयं च पंचगव्यं ततो दधि [?]।

पयो मधु स्नानीयं च दिक्ष्विन्द्रादिषु विन्यसेत् ॥

१ विधानतः -पाठान्तरम् २ फलवारि च -पाठान्तरम्

धाता दिर्षंधमध्यान्तं मता दिक्षु निवेशयेत् ।
१
दध्यादिषु कलायान्तं कोणेषु विनिवेशयेत् ॥

एवं द्रव्याणि योक्तानि विन्यसेन्मण्डलं प्रति ।

मध्ये मध्ये विनिक्षिप्य द्रव्याणां तु यथाक्रमम् ॥

शेषान् कुण्डोदकान् सर्वान् चतुःषष्टिं तु कल्पयेत् ।

ततस्तु दैविके भागे एवं कुर्वीत साधकः ॥

दिक्षि वापि च तथा च कोणे कुर्यात् तत्तद्ध क्रमात् ।

मध्ये मध्ये तथा कुर्याद् द्रव्यकुम्भं विचक्षणः ॥

ऐन्द्रे तु मध्यमे भागे न्यसेच्चन्दनकर्दमम् ।
याम्ये तु मध्यभागे तु न्यसेत् कुङ्कुमकर्दमम् ॥
वारुणे मध्यभागे तु न्यसेत्कर्पूरकर्दमम् ।

सौम्ये तु मध्यभागे तु न्यसेदौशीरकर्दमम् ॥

आग्नेये मध्यभागे तु विन्यसेत् तिलतैलकम् ।

चन्दनं कर्दमाभ्यक्तं कुंकुमं कर्दमं तथा ॥

कर्पूरकर्दमाभ्यक्तं उशीरं कर्दमं तथा ।

ऐन्द्रादिसोमपर्यन्तं विन्यसेत् विचक्षणः ॥

तिलं वा गव्यं तैलं तथा सर्षपतैलकम् ।

तथा कर्पूरतैलं च आग्नेयादिषु विन्यसेत् ॥

पुष्करणश्चैव तत्परं नरो नारायणोऽच्युतः ।

---

दध्यादि तु - पाठान्तरम् ; वापि - पाठान्तरम् ; चन्दनं - इत्यतः प्रागधिकः पाठः

[पृ. ३०८ - Ms. 4344, SVOI, Tirupati]

नैर्ऋते मध्यभागे तु न्यसेदामलतैलकम् ।
वायव्ये मध्यभागे तु न्यसेत् सर्षपतैलकम् ॥
ईशाने मध्यभागे तु न्यसेत् कर्पूरतैलकम् । [पृ. ३०८]

२५३

ईशानवाय्वोर्मध्ये विन्यसेत्तु कुमारिकाम् ॥

वैश्वानरेन्द्रयोर्मध्ये न्यसेत् सामुद्रकं जलम् ।

ततः[1] सप्तदशान् कुम्भानुत्तराननपञ्चिकान् ॥

पूरयेत् पूर्ववत्सम्यग् गन्धयुक्तेन वारिणा ।

---

१०९. <u>३३, २४-८</u>

[बिम्ब त्रैविध्यम्]

<u>१. पाद्म [क्रि.] १२, ३-६</u>

प्रतिमा गर्भविस्तारतुल्या श्रेष्ठा चतुर्मुख ॥

नवभागैकहीना तु प्रतिमा मध्यमा भवेत् ।

पंचभागैकहीना तु जघन्या परिकीर्तिता ॥

सप्तधा गर्भविस्तारं विभज्य द्वौ विवर्जयेत् ।

शिष्टभागसमुच्छ्राया श्रेष्ठा स्यादधमा त्वत्र ॥

मध्यमा पंचसु त्र्यंशैस्त्रिभिर्भ्यां कनीयसी ।

<u>२. कपि. ११, ४७-९</u>

गर्भमानप्रमाणेन प्रतिमा चोत्तमा भवेत् ।

नवभागविहीनं तु मध्यमं बिम्बमुच्यते ॥

पंचभागैकहीनं तु अधमं परिकल्पते ।

गर्भविस्तारमानं तु सप्तभागं विभाजयेत् ॥

पंचभागं गृहीत्वा तु पंचभागत्रिभागकम् ।

त्रिभागस्य द्विभागं वा उत्तमाधममध्यमम् ॥

---

१ सप्तशतं कुम्भांस्त्वाष्टाधिकपञ्चिकान् [?]

२. श्रीप्र. १२. ३,४

प्रतिमा गर्भविस्तारा श्रेष्ठा स्यात् कमलोद्भवे ।

नवभागैकहीना तु मध्या प्रतिकृतिर्भवेत् ॥

कनीयसी पंचभागैकहीना न संशयः ।

---

११०. २२, २८–३२ [बिम्बमानम्]

१. कपि. ११. ५०–३

उत्तमं[1] द्वारतुल्यं वा पादाधिकमथापि वा ।

अर्धमानापि वा कुर्यादुत्तमाधममध्यमम् ॥

गुह्यद्वारसमं वापि पादाधिकं त्रिकोनम ।

द्वारं सदर्धमित्युक्तमुत्तमाधममध्यमम् ॥

गुह्यद्वारं त्रिभेदेन कारयेत्तैव भाजयेत् ।

एकत्रिद्विहीने तु श्रेष्ठं मध्ये[2] कनिष्ठकम् ॥

---

स्तम्भमानप्रमाणेन अथवा कारयेद् द्विज ।

स्तम्भं सार्धमानं वा प्रतिमां कारयेत् सुधीः ॥

२. मा. ३. ३९–४१

उत्सेधाद्वारतुल्यं वा स्तम्भमानमथापि वा ॥

गुह्यद्वारसमं वापि द्वारात् पादाधिकं तु वा ।

---

१ उत्सेध [?]  २ मध्यं [?]

कन्यासापुटान्तं स्यात् तस्य चिबुकावधि ।
तेन केशान्तमारभ्य मुखमानं चतुर्दश ॥
अष्टोत्तरं यवशतं चिबुकाद्ययावधि ।

२·भार्ग ४, १० -२

उष्णीषमौलिभित्तिं केशान्तं षडङ्गुलं मतम् ॥
दृक्सूत्रान्तं ततारभ्य षड्विंशतियवैर्मितम् ।
कन्यासापुटान्तं स्यात् तस्य चिबुकावधि ॥
तेन केशान्तमारभ्य मुखमानं मुनीश्वर ।
अष्टोत्तरं यवशतं चिबुकाद्ययावधि ॥

---

१९५ २२, ५४ -७

[अधमदशतालानुरोधिनो बिम्बस्य अंगानां मानम्]

१·पाद्म [क्रि.] २०, १४,१

अधमे दशताले तु मुखं यवशतं मतम् ।
त्रिपदानं तावदेव स्यादूरुर्यवशतद्वयम् ॥
जङ्घा च तत्समोत्सेधा - ------ ।

२·भार्ग ४, ११,१२

अधमे दशताले तु मुखं यवशतं मतम् ।
त्रिपदानं तावदेव स्यादूरुर्यवशतद्वयम् ॥
जङ्घा च तत्समोत्सेधा ------ ।

---

१९६·२२, ६,७

[जीर्णबिम्बत्यागविवेकः]

पाद्म [च.] १७, ६,७

शिथिलावयवेषु बिम्बेषु समाधिर्विधीयते ।

मूलबेरादिबेराणां पवित्रमिदमिष्यते ।

पवित्रं मण्डले पद्मतुल्यमानं घटेऽपि च ॥

कुण्डे च मेखलामानं पूर्वैर्मुनिभिरीरितम् ।

\+ + + + +

पद्मनाभ्यरनेमीनां चक्राब्जे मण्डले सताम्

तन्मानानि पवित्राणि बाह्यमानं बहिः स्मृतम् ॥

---

१२०. <u>२२. १७-२१</u> [ पवित्रग्रन्थिसंख्या ]

<u>पाद्म [ च.] १४. ४४-८</u>

चतुःशतानि सूत्राणि <u>ग्रन्थयः सप्तविंशतिः</u> ॥

शतार्धं तन्तुसंख्या ग्रन्थयो त्रिगुणा मताः ।

द्वे शते त्रिगुणा[1] ग्रन्थिः शतमेकमनन्तरम् ॥

चतुर्गुणा ग्रन्थिसंख्या बाह्ये सूत्रं चतुःशतम् ।

<u>ग्रन्थयः पंचगुणितास्तु</u>: कुम्भे चाष्टोत्तरं शतम् ॥

तन्त्वो ग्रन्थिसंख्या च सप्तविंशतिरिष्यते ।

एकाधिकाशीतिसंख्यास्तन्तवः करके मताः ॥

सप्तविंशतिसंख्याश्च ग्रन्थयः परिकीर्तिताः ।

---

१२१. <u>२२. ९७-८</u> [ पवित्रावरोपणम् ]

<u>पाद्म [ च.] १४. १५३-४</u>

उद्धरेत् पीठगं पूर्वं ताम्र पात्रा स्यन्तरम् ।

---

१ त्रिगुणो ग्रन्थिः - पाठान्तरम्

